

समाजवादी जनता पार्टीने
लोकसभा चुनावके लिए राजस
और हरियाणासे अपने
उम्मीदवारोंकी सूची आज जारी
दो केन्द्रीयमंत्री दौलतराम स
कल्याण सिंह काल्वी शामिल हैं

पार्टीके प्रधान महासचिव
चौटालाने इन सूचियोंके साथ
विधानसभाके लिए पा
उम्मीदवारोंके नामोंकी घो
उन्होंने कहा कि हरियाणा विध
दड़बाकला सीटसे पार्टीके प्रत्या
अभी तक तय नहीं कि
उल्लेखनीय है कि य
चौटालाने विधानसभा
नामांकनपत्र दाखिल
आज राजस्थानकी स
सात सीटोंमें से पांच त
तीन सीटोंके लिए

## ...यपर भारी ...,तोड़फोड़

... सेवा)
...के जन्तर मंतर मुख्यालयपर चुनाव
...र प्रदेश विधान सभाके लिए पार्टीके
...ों द्वारा भारी तोड़फोड़ और उपद्रव
...यी। जनता दल द्वारा विधानसभा
...व किये जानेसे उम्मीदवार और उनके

...दवारों और उनके समर्थकोंके बीच
...कर्ताओं ने कार्यालयकी कुर्सियां और

(शेष पृष्ठ ११ पर)

## प्रदेश जद कार्यालय पर सन्नाटा

('आज' समाचार सेवा)

लखनऊ, २८ अप्रैल। नामांकन पत्र दाखिल करनेकी आखीरी तारीख २६ अप्रैलको समाप्त हो चुकी है और पार्टीके अधिकृत उम्मीदवारोंको दलका चुनाव निशान जमा करवानेकी आखीरी तारीख कल तीन बजे समाप्त हो जायगी। परन्तु रायल होटल स्थित जनता दलके प्रदेश कार्यालय पर लग ही नहीं रहा है कि दल चुनाव भी लड़ रहा है। वहां खामोशी सी छायी हुयी है।

जनता दल उम्मीदवारोंको जांचने परखनेके लिये उनके साक्षात्कार १८ और १९ अप्रैल को हुये थे। केव... दौरान ही जद कार्यालय पर गहमा... रही थी।

## ट्रेनमें ... के वा...

(कार्यालय प्रतिनिधि...)

वाराणसी, रविवा... दानापुर ...डलमें ब...र स्टेशनोंके बीच शनिवार बदमाशोंने गुवाहाटी-दादर ट्रेनकी एक वातानुकूलि... यात्रियोंको पि... लगभग दो ...

## ...जाबमें चुनाव : अ...

चण्डीगढ़, २८ अप्रैल (प्रे.)। पंजाबमें ...हां चुनाव सिरपर हैं, अकालीदलोंमें ...जीके साथ बिखरावकी प्रक्रिया आरम्भ ... गयी है। सिमरनजीत सिंह मानको, ...न्हें कुछ समय पहले ... ...ताका प्रबल दावेदार समझा जाता था, ...र्टीमें विद्रोहका सामना करना पड़ रहा

### मानकी पार्टीमें

दिया।

... नाम हैं बलविन्दर सिंह कोज... लखवीर सिंह, ढिल्लो, दीदार ...

ओ३म्

# मीमांसा दर्शनम्

---

महामुनि जैमिनिविरचितम्

सूत्रम्

---

लवपुरं

विरजानन्द यन्त्रालये

मुद्रितम्

मूल्य ॥)

# सूचीपत्र छह दर्शनों का

# मीमांसादर्शनम्।

## प्रथमाध्यायस्य प्रथमः पादः।

अथातो धर्मजिज्ञासा ॥ १ ॥ चोदनालक्षणोऽर्थोधर्मः ॥ २ ॥ तस्य निमित्तपरीष्टिः ॥ ३ ॥ सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षम् अनिमित्तं विद्यमानोपलम्भनत्वात् ॥ ४ ॥ औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ ५ ॥ कर्मैके तत्र दर्शनात् ॥ ६ ॥ अस्थानात् ॥ ७ ॥ करोतिशब्दात् ॥ ८ ॥ सत्वान्तरे च यौगपद्यात् ॥ ९ ॥ प्रकृतिविकृत्योश्च ॥ १० ॥ वृद्धिश्च कर्त्तृभूम्नाऽस्य ॥ ११ ॥ समन्तु तत्र दर्शनम् ॥ १२ ॥ सतः परम् अदर्शनं विषयानागमात् ॥ १३ प्रयोगस्य परम् ॥ १४ ॥ आदित्यवद्यौगपद्यम् ॥ १५ वर्णान्तरमविकारः ॥ १६ ॥ नादवृद्धिपरा ॥ १७ ॥ नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥ १८ ॥

सर्वत्र यौगपद्यात् ॥ १९ ॥ सङ्ख्याभावात् ॥ २० ॥ अनपेक्षत्वात् ॥ २१ ॥ प्रख्याभावाच्च योगस्य ॥ २२ लिङ्गदर्शनाच्च ॥ २३ ॥ उत्पत्तौ वाऽवचनाः स्युरर्थ स्यातन्निमित्तत्वात् ॥ २४ ॥ तद्भूतनां क्रियार्थेन सामाम्नायोऽर्थस्य तन्निमित्तत्वात् ॥ २५ ॥ लोके सन्नियमात्प्रयोगसन्निकर्षः स्यात् ॥ २६ ॥ वेदांश्चैके सन्निकर्षं पुरुषाख्याः ॥ २७ ॥ अनित्यदर्शनाच्च ॥ २८ उक्तन्तु शब्दपूर्वत्वम् ॥ २९ ॥ आख्या प्रवचनात् ॥ ३० ॥ परन्तु श्रुतिसामान्यमात्रम् ॥ ३१ ॥
कृते वा विनियोगः स्यात् कर्मणः सम्बन्धात् ॥३२॥

---

## प्रथमाध्यायस्य द्वितीयः पादः ।

पू. १ आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥ १ ॥ पू. २ शास्त्रदृष्टविरोधाच्च ॥ २ ॥ तथा फलाभावात् ॥ ३ ॥ अन्यानर्थक्यात् ॥ ४ ॥ अभागिप्रतिषेधाच्च ॥ ५ ॥ अनित्यसंयोगात् ॥ ६ ॥ ३० १ विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः ३. २ ॥ ७ ॥ तुल्यं च साम्प्रदायिकम् ॥ ८ ॥ अप्राप्ता ३. ३ चानुपपत्तिः प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्व

प्रयोगभूतस्तस्मादुपपद्येत ॥ ९ ॥ गुणवादस्तु ॥ १० ॥ रूपात्प्रायात् ॥ ११ ॥ दूरभूयस्त्वात् ॥ १२ ॥ अपराधात् कर्त्तुश्च पुत्रदर्शनम ॥ १३ ॥ आकालिकेप्सा ॥ १४ ॥ विद्याप्रशंसा ॥ १५ ॥ सर्वत्वमाधिकारिकम् ॥ १६ ॥ फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात् ॥ १७ ॥ अन्त्ययोर्यथोक्तम् ॥ १८ ॥ (विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥ लोकवदिति चेत् ॥ २० ॥ न पूर्वत्वात् ॥ २१ ॥) उक्तन्तु वाक्यशेषत्वम् ॥ २२ ॥ विधिस्त्वनर्थकः क्वचित्, तस्मात् स्तुतिः प्रतीयेत, तत्सामान्यादितरेषु तथात्वम् ॥ २३ ॥ प्रकरणे सम्भवन् अपकर्षो न कल्प्येत विध्यानर्थक्यं हि तं प्रति ॥ २४ ॥ विधौ च वाक्यभेदः स्यात् ॥ २५ ॥ हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ २६ ॥ स्तुतिस्तु शब्दपूर्वत्वात् अचोदना च तस्य ॥ २७ ॥ व्यर्थे स्तुतिरन्याय्येति चेत् ॥ २८ ॥ अर्थस्तु, विधिशेषत्वात् यथा लोके ॥ २९ ॥ यदि च हेतुः, अवतिष्ठेत निर्देशात् सामान्यादितिचेत्, अव्यवस्था विधीनां स्यात् ॥ ३० ॥ तदर्थशास्त्रात् ॥ ३१ ॥ वाक्यनियमात् ॥ ३२ ॥ बुद्धशास्त्रात् ॥ ३३ ॥ अविद्यमान

मन्त्रानर्थक्यप्रकरणम्

वचनात् ॥ ३४ ॥ अचेतने ऽर्थबन्धनात् ॥ ३५ ॥ अर्थविप्रतिषेधात् ॥ ३६ ॥ स्वाध्यायवद्वचनात् ॥ ३७ ॥ अविज्ञेयात् ॥ ३८ ॥ अनित्यसंयोगान् मन्त्रानर्थक्यम् ॥ ३९ ॥ अविशिष्टस्तु वाक्यार्थः ॥ ४० गुणार्थेन पुनः श्रुतिः ॥ ४१ ॥ परिसङ्ख्या ॥ ४२ ॥ अर्थवादो वा ॥ ४३ ॥ अविरुद्धं परम् ॥ ४४ ॥ सम्प्रैषे कर्मगर्हानुपालम्भः संस्कारत्वात् ॥ ४५ ॥ अभिधानेऽर्थवादः ॥ ४६ ॥ गुणाद्विप्रतिषेधः स्यात् ॥ ४७ ॥ विद्यावचनमसंयोगात् ॥ ४८ ॥ सतः परमविज्ञानम् ॥ ४९ ॥ उक्तश्चानित्यसंयोगः ॥ ५० लिङ्गोपदेशश्च तदर्थवत् ॥ ५१ ॥ ऊहः ॥ ५२ ॥ विधिशब्दाश्च ॥ ५३ ॥

---

## अथ तृतीयः पादः ।

धर्मस्य शब्दमूलत्वात् अशब्दमनपेक्षं स्यात् ॥ १ ॥ अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् ॥ २ ॥ विरोधे त्वनपेक्ष्यं स्यात्, असति ह्यनुमानम् ॥ ३ ॥ हेतुदर्शनाच्च ॥ ४ ॥ शिष्टाकोपेऽविरुद्धमिति ॥ ५ ॥ न शास्त्रपरिमाणत्वात् ॥ ६ ॥

अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥ ७ ॥ तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् ॥ ८ शास्त्रस्था वा तन्निमित्तत्वात् ॥ ९ ॥ चोदितन्तु प्रतीयेताविरोधात् प्रमाणेन ॥ १० ॥ प्रयोगशास्त्रमिति चेत् ॥ ११ ॥ न असन्नियमात् ॥ १२ ॥ अवाक्यशेषाच्च ॥ १३ ॥ सर्वत्र च प्रयोगात् सन्निधानशास्त्राच्च ॥ १४ ॥ अनुमानव्यवस्थानात्तत् संयुक्तं प्रमाणं स्यात् ॥ १५ ॥ अपि वा सर्वधर्मः स्यात् तन्न्यायत्वाद्विधानस्य ॥ १६ ॥ दर्शनाद्विनियोगःस्यात् ॥ १७॥ लिङ्गाभावात् च नित्यस्य ॥ १८ आख्या हि देशसंयोगात् ॥ १९ ॥ नस्याद्देशांन्तरेष्विति चेत् ॥ २० ॥ स्याद्योगाख्या हि माथुरवत् ॥ २१ ॥ कर्मधर्मो वा प्रवणवत् ॥ २२ ॥ तुल्यन्तु कर्तृधर्मेण ॥ २३ ॥ प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥ २४ ॥ शब्दे प्रयत्ननिष्पत्तेरपराधस्यभागित्वम् ॥ २५ ॥ अन्यायश्चानेकशब्दत्वम् ॥ २६ ॥ तत्र तत्त्वमभियोगविशेषात् स्यात् ॥ २७ ॥ तदशक्तिश्चानुरूपत्वात् ॥ २८ ॥ एकदेशत्वात् च विभक्तिव्यत्यये स्यात् ॥ २९ ॥ प्रयोगचोदना भावादर्थैकत्वमविभागात् ॥ ३० ॥ अद्रव्यशब्दत्वात् ॥ ३१ ॥ अन्यदर्श

नात् च ॥ ३२ ॥ आकृतिस्तु क्रियार्थत्वात् ॥ ३३ ॥ न क्रिया स्यादिति चेदर्थान्तरे विधानं न द्रव्यमिति चेत् ॥ ३४ ॥ तदर्थत्वात् प्रयोगस्याविभागः ॥ ३५ ॥

---

## चतुर्थ पादः ।

उक्तं समाम्नायैदमर्थ्यं तस्मात् सर्वं तदर्थं स्यात् ॥ १ ॥ अपि वा नामधेयं स्यात् यदुत्पत्तावपूर्वमविधायकत्वात् ॥ २ ॥ यस्मिन् गुणोपदेशः प्राधान्यतोऽभिसम्बन्धः ॥ ३ ॥ तत्प्रख्यञ्चान्यशास्त्रम् ॥ ४ ॥ तद्व्यपदेशं च ॥ ५ ॥ नामधेये गुणश्रुतेः स्याद्विधानम् इति चेत् ॥ ५ ॥ तुल्यत्वात् क्रिययोर्न ॥ ७ ॥ ऐकशब्द्ये परार्थवत् ॥ ८ ॥ तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थेन चेदन्येन शिष्टाः ॥ ९ बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥ १० ॥ प्रोक्षणीष्वर्थ संयोगात् ॥ ११ ॥ तथा निर्मंथ्ये १२ वैश्वदेवे विकल्प इति चेत् ॥ १३ ॥ न वा, प्रकरणात् प्रत्यक्षविधानाच्च न हि प्रकरणं द्रव्यस्य

॥ १४ ॥ मिथश्चानर्थसम्बन्धः ॥ १५ ॥ परार्थत्वात् गुणानाम् ॥ १६ ॥ पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ १७ ॥ गुणस्य तु विधानार्थे तद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्ताऽस्ति १८ तच्छेषो नोपपद्यते ॥ १९ ॥ अविभागाद्विधानार्थे स्तुत्यर्थे नोपपद्येरन् ॥ २० ॥ कारणं स्यात्? इति चेत् ॥ २१ ॥ आनर्थक्यादकारणं कर्तुं हि कारणानि गुणार्थो हि विधीयते ॥ २२ ॥ तत् सिद्धिः २३ जातिः ॥ २४ ॥ सारूप्यात् ॥ २५ ॥ प्रशंसा ॥ २६ ॥ भूमा ॥ २७ ॥ लिङ्गसमवायात् ॥ २८ ॥ संन्दिग्धेषु वाक्यशेषात् ॥ २९ ॥ अर्थाद्वा कल्पनैकदेशत्वात् ॥ ३० ॥

---

## द्वितीय अध्याये १ पादः ।

भावार्थाः कर्म शब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ॥ १ ॥ सर्वेषां भावोऽर्थ इति चेत् ॥ येषामुत्पत्तौ स्वेप्रयोगे रूपोपलब्धिस्तानि नामानि तस्मात् तेभ्यः पराकाङ्क्षा भूतत्वात् स्वे प्रयोगे ॥ ३ ॥ येषां तूत्प तावर्थे स्वे प्रयोगो न विद्यते तान्या

ख्यातानि। तस्मात् तेभ्यः प्रतीयेताश्रितत्त्वात् प्रयोगस्य ॥ ४ ॥ चोदना पुनरारम्भः ॥ ५ ॥ तानि द्वैधं गुणप्रधानभूतानि ॥ ६ ॥ यैर्द्रव्यं न चिकीर्ष्यते, तानि प्रधानभूतानि, द्रव्यस्य गुणभूतत्वात् ॥ ७ ॥ यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्त्वात् ॥ ८ ॥ धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥ ९ ॥ तुल्यश्रुतित्वाद्वा इतरैः सधर्मः स्यात् ॥ १० ॥ द्रव्योपदेश इति चेत् ॥ ११ ॥ न तदर्थत्वात् लोकवत्तस्य च शेषभूतत्वात् ॥ १२ ॥ स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् ॥ १३ ॥ अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूत त्वात् ॥ १४ वशावद्वा गुणार्थं स्यात् ॥ १५ ॥ न श्रुतिसमवायित्वात् ॥ १६ ॥ व्यपदेशभेदाच्च ॥ १७ ॥ गुणश्चानर्थकः स्यात् ॥ १८ ॥ तथा याज्यापुरो रुचोः १९ वशायामर्थसमवायात् ॥ २० ॥ यत्रेति वाऽर्थवत्त्वात् स्यात् ॥ २१ ॥ न त्वाम्नातेषु ॥ २२ ॥ दृश्यते ॥ २३ ॥ अपि वा श्रुतिसंयोगात् प्रकरणेस्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ॥ २४ ॥ शब्दपृथक्त्वाच्च ॥ २५ ॥ अनर्थकञ्च तद्वचनम् ॥ २६ ॥ अन्यस्यार्थः

प्रतीयते ॥ २७ ॥ अभिधानं च कर्मवत् ॥ २८ ॥ फलनिर्वृत्तिश्च ॥ २९ ॥ विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ॥ ३० ॥ अपि वा प्रयोगसामर्थ्यात् मन्त्रोऽभिधानवाची स्यात् ॥ ३१ ॥ तच्चोदकेषु मन्त्राख्या ॥ ३२ ॥ शेषे ब्राह्मणशब्दः ॥ ३३ ॥ अनाम्ना तेष्वमन्त्रत्वमाम्ना तेषु हि विभागः ॥ ३४ ॥ तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ ३५ ॥ गीतिषु सामाख्या ॥ ३६ शेषे यजुः शब्दः ॥ ३७ ॥ निगदो वा चतुर्थं स्याद्धर्मविशेषात् ॥ ३८ ॥ व्यपदेशाच्च ॥ ३९ ॥ यजूंषि वा तद्रूपत्वात् ॥ ४० ॥ वचनाद्धर्मविशेषः ॥ ४१ ॥ अर्थाच्च ॥ ४२ ॥ गुणार्थो व्यपदेशः ॥ ४३ ॥ सर्वेषामिति चेत् ॥ ४४ ॥ न, ऋग्व्यपदेशात् ॥ ४५ ॥ अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥ ४६ ॥ समेषु वाक्यभेदः स्यात् ॥ ४७ ॥ अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात् ॥ ४८ ॥ व्यवयान्नानुषज्येत ॥ ४९ ॥

॥ द्वितीयः पादः ॥

शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ॥ १ ॥ एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्यात् ॥ २ ॥ प्रकरणात्तु पौर्णमास्यां रूपावचनात् ॥ ३ ॥ विशेषदर्शनाच्च सर्वेषां समेषु ह्यप्रवृत्तिः स्यात् ॥ ४ ॥ गुणस्तु श्रुति संयोगात् ॥ ५ ॥ चोदना वा गुणानां

युगपच्छास्त्राच्चोदिते हि तदर्थत्वात्तस्य तस्योप-
दिश्येत ॥ ६ ॥ व्यपदेशश्च तद्वत् ॥ ७ ॥ लिङ्गदर्शना-
च्च ॥ ८ ॥ पौर्णमासीवदुपांशुयाजः स्यात् ॥ ९ ॥
चोदना वाऽप्रकृतत्वात् ॥ १० ॥ गुणोपबन्धात् ॥ ११
प्राये वचनाच्च ॥ १२ ॥ आधाराग्निहोत्रमरूप
त्वात् ॥ १३ ॥ संज्ञोपबन्धात् ॥ १४ ॥ अप्रकृत
त्वाच्च ॥ १५ ॥ चोदना वा शब्दार्थस्य प्रयोग भूत
त्वात्, तत्सन्निधेर्गुणार्थेन पुनः श्रुतिः ॥ १६ ॥
द्रव्यसंयोगाच्चोदना पशुसोमयोः, प्रकरणे
ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणार्थेन ॥ १७
अचोदकाश्च संस्काराः ॥ १८ ॥ तद्भेदात्कर्मणोऽ
भ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्याद्भेदो द्रव्यगुणी
भावात् ॥ १९ ॥ संस्कारस्तु न भिद्येत, परार्थत्वात्
द्रव्यस्य गुणभूतत्वात् ॥ २० ॥ पृथक्त्वनिवेशात्
संख्यया कर्मभेदः स्यात् ॥ २१ ॥ संज्ञा चोत्पत्ति
संयोगात् ॥ २२ ॥ गुणश्चापूर्वसंयोगे वाक्ययोः सम
त्वात् ॥ २३ ॥ अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत
२४ ॥ फलश्रुतेस्तु कर्म स्यात्, फलस्य कर्मयोगि ॥
त्वात् ॥ २५ ॥ अतुल्यत्वात् तु वाक्ययोर्गुणे तस्य
प्रतीयेत ॥ २६ ॥ समेषु कर्मयुक्तं स्यात् ॥ २७ ॥
सौभरे पुरुषश्रुतेर्निधनं कामसंयोगः ॥ २८ ॥

सर्वस्य उत्क्रामत्वात् तस्मिन् कामश्रुतिः स्यात्, नि ·धनार्था पुनः श्रुतिः ॥ २९ ॥

॥ तृतीयः पादः ॥

गुणस्तु क्रतुसंयोगात् कर्मान्तरं प्रयोजयेत् संयोगस्याशेषभूत्वात् ॥ १ ॥ एकस्य तु लिङ्गभेदात्प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वात् ॥ २ ॥ अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते ॥ ३ ॥ आधाने सर्वशेषत्वात् ॥ ४ ॥ अयनेषु चोदनान्तरं संज्ञोपबन्धात् ॥ ५ ॥ अगुणाच्च कर्मचोदना ॥ ६ ॥ समाप्तं च फले वाक्यम् ॥ ७ ॥ विकारो वा प्रकरणात् ॥ ८ ॥ लिङ्गदर्शनात् च ॥ ९ ॥ गुणात्संज्ञोपबन्धः ॥ १० ॥ समाप्तिरविशिष्टा ॥ ११ ॥ संस्कारस्याप्रकरणेऽकर्मशब्दत्वात् ॥ १२ ॥ यावदुक्तं वा, कर्मणः श्रुतिमूलत्वात् ॥ १३ ॥ यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसम्बन्धात् ॥ १४ ॥ लिङ्गदर्शनाच्च ॥ १५ ॥ विशये प्रायदर्शनात् ॥ १६ ॥ अर्थवादोपपत्तेश्च ॥ १७ ॥ संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ॥ १८ ॥ पात्नीवते तु पूर्वत्वादवच्छेदः ॥ १९ अद्रव्यत्वात् केवले कर्मशेषः स्यात् २० ॥ अग्निस्तु लिङ्गदर्शनात् क्रतुशब्दः प्रतीयेत ॥ २१ ॥ द्रव्यं वा

स्यात् चोदनाशास्त्तदर्थत्वात् ॥ २२ ॥ तत्संयोगात् क्रतुस्तदाख्यः स्यात्तेन धर्मविधानानि ॥ २३ ॥ प्रकरणान्तरे प्रयोजनान्यत्वम् ॥ २४ ॥ फलं चाकर्म सन्निधौ॥ २५ ॥ सन्निधौ त्वविभागात् फलार्थेन पुनः श्रुतिः ॥ २६ ॥ आग्नेय सूक्तहेतुत्वादभ्यासेन प्रतीयेत ॥ २७ ॥ अविभागात्तु कर्मणा द्विरुक्तेर्न विधीयते ॥ २८ अन्यार्था वा पुनः श्रुतिः ॥ २९ ॥

---

## ॥ चतुर्थः पादः ॥

यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् ॥ १ ॥ कर्तुर्वा श्रुतिसंयोगात् ॥ २ ॥ लिङ्गदर्शनाच्च कर्म्मधर्म्मे हि प्रक्रमेण नियम्येत तत्रानर्थकमन्यत् स्यात् ॥ ३ ॥ व्यपवर्गञ्च दर्शयति कालश्चेत्कर्मभेदः स्यात् ॥ ४ ॥ अनित्यत्वात्तु नैवं स्यात् ॥ ५ ॥ विरोधश्चापि पूर्ववत् ॥ ६ ॥ कर्तुस्तु धर्मनियमात्कालशास्त्रं निमित्तं स्यात् ॥ ७॥ नामरूप धर्मविशेषपुनरुक्तिनिन्दाऽशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनात् शाखान्तरेषु कर्मभेदः स्यात् ॥ ८ ॥ एकं वा संयोगरूपचोदनाख्या विशेषात् ॥ ९ ॥

न नाम्ना स्यादचोदनाभिधानत्वात् ॥ १० ॥ सर्व्वेषाञ्चै ककर्म्यं स्यात् ॥ ११ ॥ कृतकं चाभिधानम् ॥ १२ ॥ एकत्वेऽपि परम् ॥ १३ ॥ विद्यायां धर्मशास्त्रम् ॥ १४ ॥ आग्नेयवत्पुनर्वचनम् ॥ १५ ॥ अविर्वचनं वा श्रुतिसंयोगाविशेषात् ॥ १६ ॥ अर्थासन्निधेश्च ॥ १७ ॥ न चैकं प्रति शिष्यते ॥ १८ ॥ समाप्तिवच्च सम्प्रेक्षा ॥ १९ ॥ एकत्वेऽपि पराणि निन्दाशक्तिसमाप्तिवचनानि ॥ २० ॥ प्रायश्चित्तं निमित्तेन ॥ २१ ॥ प्रक्रमाद्वा नियोगेन ॥ २२ ॥ समाप्तिः पूर्ववत्त्वात् यथाज्ञाते प्रतीयेत ॥ २३ ॥ लिङ्गमविशिष्टं सर्वशेषत्वान्न हि तत्र कर्म चोदना तस्मात् द्वादशाहस्याहारव्यपदेशः स्यात् ॥ २४ ॥ द्रव्ये चाचोदितत्वात् विधीनामव्यवस्थां स्यात् निर्देशाद्व्यवतिष्ठेत तस्मात् नित्यानुवादः स्यात् ॥ २५ ॥ विहितप्रतिषेधात्पक्षेऽतिरेकः स्यात् ॥ २६ ॥ सारस्वते विप्रतिषेधात् यदेति स्यात् ॥ २७ ॥ उपहव्येऽप्रतिप्रसवः ॥ २८ ॥ गुणार्था वा पुनः श्रुतिः ॥ २९ ॥ प्रत्ययश्चापि दर्शयति ॥ ३० ॥ अपि वा क्रमसंयोगाद्विधिपृथक्त्वमेकस्यां व्यवतिष्ठेत ॥ ३१ ॥ विरोधिना त्वसंयोगादैककर्म्यं तत् संयोगाद्विधीनां सर्वकर्म प्रत्ययः स्यात् ॥ ३२ ॥

तृतीये अध्याये प्रथमः पादः ।

अथातः शेषलक्षणम् ॥ १ ॥ शेषःपरार्थत्वात् । २ । द्रव्यगुणसंस्कारेषु बादरिः ॥ ३ ॥ कर्माण्यपि जैमिनिः,फलार्थत्वात् ॥ ४ ॥ फलं च पुरुषार्थत्वात् । ५ । पुरुषश्च कर्मार्थत्वात् ॥ ६ ॥ तेषामर्थेन सम्बन्धः । ७ । विहितस्तु सर्वधर्मः स्यात्संयोगतोऽविशेषात् प्रकरणाविशेषाच्च ॥ ८ ॥ अर्थलोपादकर्म स्यात् ॥ ९ ॥ फलन्तु सहचेष्टया शब्दार्थोऽभावाद्विप्रयोगे स्यात् । १० । द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेवचोद्येत ॥ ११ ॥ अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् ॥ १२ ॥ एकत्वयुक्तमेकस्य श्रुतिसंयोगात् ॥ १३ ॥ सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम् ॥ १४ ॥ चोदिते तु परार्थत्वाद्यथा श्रुति प्रतीयेत ॥ १५ ॥ संस्काराद्वा गुणानामव्यवस्था स्यात् ॥ १६ ॥ व्यवस्था वा अर्थस्य श्रुतिसंयोगात्,तस्य शब्दप्रमाणत्वात् ॥ १७ । आनर्थक्यात्तदङ्गेषु ॥ १८ ॥ कर्तृगुणे तु कर्मासमवायात् वाक्यभेदः स्यात् ॥ १९ ॥ साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण ॥ २० ॥ सन्दिग्धे तु व्यवायाद्वाक्यभेदः स्यात् ॥ २१ ॥ गुणानाञ्च परः

र्थत्वादसम्बन्धः समत्वात्स्यात् ॥ २२ ॥ मिथस्थानर्थसम्बन्धात् ॥ २३ ॥ आनन्तर्य्यमचोदना ॥ २४ ॥ वाक्यानाञ्च समाप्तत्वात् ॥ २५ ॥ शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत मिथस्तेषामसम्बन्धात् ॥ २६ ॥ व्यवस्था वा अर्थसंयोगात् लिंगस्यार्थेन सम्बन्धात् लक्षणार्था गुणश्रुतिः ॥ २७ ॥

अथ तृतीये अध्याये द्वितीयः पादः ।

अर्थाभिधानसामर्थ्यान्मन्त्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसम्बन्धोऽर्थेन नित्यसंयोगात् ॥ १ ॥ संस्कारकत्वादचोदितेन स्यात् ॥ २ ॥ वचनात्त्वयथार्थमैन्द्री स्यात् ॥ ३ ॥ गुणाद्वाप्यभिधानं स्यात् सम्बन्धस्याशास्त्रहेतुत्वात् ॥ ४ ॥ तथाह्वानमपीति चेत् ॥ ५ ॥ न कालविधिश्चोदितत्वात् ॥ ६ ॥ गुणाभावात् ॥ ७ ॥ लिङ्गाच्च ॥ ८ ॥ विधिकोपश्चोपदेशे स्यात् ॥ ९ ॥ तथोत्थानविसर्जने ॥ १० ॥ सूक्तवाचे कालविधिः परार्थत्वात् ॥ ११ ॥ उपदेशो वा याज्याशब्दो हि नाकस्मात् ॥ १२ ॥ स देवतार्थस्तत्संयोगात् ॥ १३ ॥ प्रतिपत्तिरिति चेत्, स्विष्टकृदुभयसंस्कारः स्या-

त् ॥ १४ ॥ कृत्स्नोपदेशादुभयत्र सर्ववचनम् । १५ । यथार्थं वा शेषभूतसंस्कारात् ॥ १६ ॥ वचनादिति चेत् ॥ १७ ॥ प्रकरणाविभागादुभे प्रति कृत्स्न-शब्दः ॥ १८ ॥ लिङ्गक्रमसमाख्यानात्काम्ययुक्तं स-माम्नानम् ॥ १९ ॥ अधिकारे च मन्त्र विधिरतदा-ख्येषु शिष्टत्वात् ॥ २० ॥ तदाख्यो वा प्रकरणोपप-त्तिभ्याम् ॥ २१ ॥ अनर्थकश्चोपदेशः स्यादसम्बन्धात् फलवता नत्वुपस्थानं फलवत् ॥ २२ ॥ सर्वेषां चो-पदिष्टत्वात् ॥ २३ ॥ लिङ्गसमाख्यानाभ्यां भक्षार्थ-ताऽनुवाकस्य ॥ २४ ॥ तस्य रूपोपदेशाभ्यामपकर्षो ऽर्थस्य चोदितत्वात् ॥ २५ ॥ गुणाभिधानान्मन्द्रादि रेकमन्त्रः स्यात् तयोरेकार्थ संयोगात् ॥ २६ ॥ लिङ्ग विशेषनिर्देशात् समानविधानेष्वनैन्द्राणाममन्त्रत्व-म् ॥ २७ ॥ यथादेवतं वा तत्प्रकृतित्वं हि दर्शय ति ॥ २८ ॥ पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशे षत्वात् ॥ २९ ॥ अपनयाद्वा पूर्वस्य अनुपलक्षण-म् ॥ ३० ॥ ग्रहणाद्वापनयः स्यात् ॥ ३१ ॥ पात्नीव-ते तु पूर्ववत् ॥ ३२ ॥ ग्रहणाद्वापनीतं स्यात् ॥ ३३ ॥ त्वष्टारन्तूपलक्षयेत्पानात् ॥ ३४ ॥ अतुल्यत्वात्तु नैवं स्यात् ॥ ३५ ॥ त्रिंशच्च परार्थत्वात् ॥ ३६ ॥

वषट्कारश्च कर्तृवत् ॥ ३७ ॥ छन्दः प्रतिषेधस्तु सर्वगामित्वात् ॥ ३८ ॥ ऐन्द्राग्ने तु लिङ्गभावात् स्यात् ॥ ३९ ॥ एकस्मिन् वा देवतान्तराद्विभागवत् ४० ॥ छन्दश्च देवतावत् ॥ ४१ ॥ सर्वेषु वाऽभावादेकच्छन्दसः ॥ ४२ ॥ सर्वेषां वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात् सवनाधिकारो हि ॥ ४३ ॥

## तृतीये अध्याये तृतीयः पादः

श्रुतेर्जाताधिकारः स्यात् ॥ १ ॥ वेदो वा प्रायदर्शनात् ॥ २ ॥ लिङ्गाच्च ॥ ३ ॥ धर्मोपदेशाच्च न हि द्रव्येण सम्बन्धः ॥ ४ ॥ त्रयीविद्याख्या च तद्विदि ॥ ५ ॥ व्यतिक्रमे यथाश्रुतीति चेत् ॥ ६ ॥ न सर्वस्मिन्निवेशात् ॥ ७ ॥ वेदसंयोगान्न प्रकरणेन बाध्येत ॥ ८ ॥ गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥ ९ ॥ भूयस्त्वेन उभयश्रुति ॥ १० ॥ असंयुक्तं प्रकरणादिति कर्त्तव्यतार्थित्वात् ॥ ११ ॥ क्रमश्च देशसामान्यात् ॥ १२ ॥ आख्या चैवं तदर्थत्वात् ॥ १३ ॥ श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ॥ १४ ॥ अहीनो वा प्रकरणाद्गौणः ॥ १५ ॥ असंयो-

गात्तु, मुख्यस्य तस्मादपकृष्येत ॥ १६ ॥ द्वित्वबहु-
त्वयुक्तं वा चोदनात्तस्य ॥ १७ ॥ पक्षेणार्थकृतस्येति
चेत् ॥ १८ ॥ न प्रकृतेरेकसंयोगात् ॥ १९ ॥
जाघनी चैकदेशत्वात् ॥ २० ॥ चोदना वाऽपूर्व-
त्वात् ॥ २१ ॥ एकदेश इति चेत् ॥ २२ ॥ न प्रकृते-
रशास्त्रनिष्पत्तेः ॥ २३ ॥ सन्तर्दनं प्रकृतौ क्रयणवदन-
र्थलोपात् स्यात् ॥ २४ ॥ उत्कर्षो वा, ग्रहणाद्विशेषस्य
२५ ॥ कर्तृतो वा विशेषस्य तन्निमित्तत्वात् ॥ २६॥
क्रतुतो वार्थवादानुपपत्तेः स्यात् ॥ २७ ॥ संख्यासु
कर्तृवद्धारणार्थाविशेषात् ॥ २८ ॥ उक्थ्यादिषु
वार्थस्य विद्यमानत्वात् ॥ २९ ॥ अविशेषात् स्तुति-
र्व्यर्थेति चेत् ॥ ३० ॥ स्यादनित्यत्वात् ॥ ३१ ॥
सञ्ज्ञायुक्तं क्रतोः प्रकरणात् स्यात् ॥ ३२ ॥ नैमि-
त्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात् ॥ ३३
॥ पौष्णस्य पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ ॥
३४ ॥ तत्सर्वार्थमविशेषात् ॥ ३५ ॥ चरौ वा, अर्था-
क्तं पुरोडाशेऽर्थविप्रतिषेधात्पशौ न स्यात् ॥ ३६ ॥
चरावपीति चेत् ॥ ३७ ॥ न पक्तिनामत्वात् ॥ ३८
एकस्मिन्नेकसंयोगात् ॥ ३९ ॥ धर्म्मं विप्रति-
षेधाच्च ॥ ४० ॥ अपि वा सद्वितीये स्याद्देवतानिमि

त्त्वात् ॥ ४१ ॥ लिङ्गदर्शनाच्च ॥ ४२ ॥ वचनात्सर्वपेषणं तं प्रति शास्त्रवत्त्वादर्थाभावात् द्विचरावपेषणं भवति ॥ ४३ ॥ एकस्मिन् वार्थधर्मत्वादैन्द्राग्नवदुभयोर्न स्यादचोदितत्वात् ॥ ४४ ॥ हेतुमात्रमदन्तत्वम् ॥ ४५ ॥ वचनं परम् ॥ ४६ ॥

## तृतीये अध्याये चतुर्थपादः

निवीतमिति मनुष्यधर्मः शब्दस्य तत्प्रधानत्वात् ॥ १ ॥ अपदेशो वा, अर्थस्य विद्यमानत्वात् ॥ २ ॥ विधिस्त्वपूर्वत्वात् स्यात् ॥ ३ ॥ स प्रायात्कर्मधर्मः स्यात् ॥ ४ ॥ वाक्यशेषत्वात् ॥ ५ ॥ तत्प्रकरणे, यत्तत्संयुक्तमविप्रतिषेधात् ॥ ६ ॥ तत्प्रधाने वा तुल्यवत्प्रसङ्ख्यानादितरस्य तदर्थत्वात् ॥ ७ ॥ अर्थवादो वा प्रकरणात् ॥ ८ ॥ विधिना चैकवाक्यत्वात् ॥ ९ ॥ दिग्विभागश्च तद्वत्सम्बन्धस्यार्थहेतुत्वात् ॥ १० ॥ परुषि दित-पूर्ण- घृत-विदग्धञ्च तद्वत् ॥ ११ ॥ अकर्म क्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यात् ॥ १२ ॥ विधिर्वा संयोगान्तरात् ॥ १३ ॥ अहीनवत्पुरुषस्तदर्थत्वात् ॥ १४ ॥ प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत् ॥ १५ ॥ व्यपदेशा॰

दपकृष्येत ॥ १६ ॥ शंयौ च सर्व्व परिदानात् ॥ १७
प्रागपरोधात् मलवद्वाससः ॥ १८ ॥ अन्नप्रति-
षेधाच्च ॥ १९ ॥ अप्रकरणे तु तद्धर्मस्ततो विशेषात्
२० ॥ अद्रव्यत्वात्तु शेषः स्यात् ॥ २१ ॥ वेदसंयो-
गात् ॥ २२ ॥ द्रव्यसंयोगाच्च ॥ २३ ॥ स्याद्वास्य
संयोगवत् फलेन सम्बन्धस्तस्मात् कर्मैतिशायनः ॥
२४ ॥ शेषोऽप्रकरणेऽविशेषात् सर्वकर्मणाम् ॥ २५
होमास्तु व्यवतिष्ठेरन्नाहवनीयसंयोगात् ॥ २६ ॥
शपस्य समाख्यानात् ॥ २७ ॥ दोषात्त्विष्टिर्लौकिके
स्याच्छास्त्राद्धि वैदिके न दोषः स्यात् ॥ २८ ॥ अर्थ-
वादो वा अनुपपातात् तस्माद्यज्ञे प्रतीयेत ॥ २९
अचोदितं च कर्मभेदात् ॥ ३० ॥ सा लिङ्गादार्त्वि-
जे स्यात् ॥ ३१ ॥ पान-व्यापच्च तद्वत् ॥ ३२ ॥
दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न दोषःस्यात्
॥ ३३ ॥ तत्सर्वत्राविशेषात् ॥ ३४ ॥ स्वामिनो वा
तदर्थत्वात् ॥ ३५ ॥ लिङ्गदर्शनाच्च ॥ ३६ ॥ सर्वं
प्रदानं हविषस्तदर्थत्वात् ॥३७॥ निरवदानात्तु शेषः
स्यात् ॥ ३८ ॥ उपायो वा तदर्थत्वात् ॥ ३९ ॥
कृतत्वात्तु कर्मणः सकृत्स्यात् द्रव्यस्य गुणभूतत्वात्

॥ ४० ॥ शेषदर्शनाच्च ॥ ४१ ॥ अप्रयोजकत्वादेकस्मात् क्रियेरन् शेषस्य गुणभूतत्वात् ॥ ४२ ॥ संस्कृतत्वाच्च ॥ ४३ ॥ सर्वेभ्यो वा कारणाविशेषात्, संस्कारस्य तदर्थत्वात् ॥ ४४ ॥ लिङ्गदर्शनाच्च ॥ ४५ ॥ एकस्माच्चेत् यथाकाम्यविशेषात् ॥ ४६ ॥ मुख्याद्वा पूर्वकालात् ॥ ४७ ॥ भक्षाश्रवणाद्दानशब्दः परिक्रये ॥ ४८ ॥ तत्संस्तवाच्च ॥ ४९ ॥ भक्षार्थो वा द्रव्ये समत्वात् ॥ ५० ॥ व्यादेशाद्दानसंस्तुति ॥ ५१ ॥

## तृतीये अध्याये पञ्चमः पादः

आज्याच्च सर्वसंयोगात् ॥ १ ॥ कारणाच्च ॥ २ ॥ एकस्मिन् समवत्तशब्दात् ॥ ३ ॥ आज्ये च दर्शनात् स्विष्टकृदर्थवादस्य ॥ ४ ॥ अशेषत्वात्तु नैवं स्यात्सर्वादानात् अशेषता ॥ ५ ॥ साधारण्यान्न ध्रुवायां स्यात् ॥ ६ ॥ अवत्तत्वाच जुह्वां, तस्य च होमसंयोगात् ॥ ७ ॥ चमसवदिति चेत् ॥ ८ न चोदनाविरोधाद्धविः प्रकल्पनत्वाच्च ॥ ९ ॥ उत्पन्नाधिकारात्सति सर्ववचनम् ॥ १० ॥ जाति-

विशेषात् परम् ॥ ११ ॥ अन्यसमरेकार्थे ॥१२ ॥ सा-
कं प्रस्थाय्ये स्विष्टकृदिडञ्च तद्वत् ॥ १३ ॥ सौत्राम-
ण्याञ्च गृहेषु ॥ १४ ॥ तद्वञ्च शेषवचनम् ॥ १५ ॥
द्रव्यैकत्वे कर्म्मभेदात्प्रतिकर्म्म क्रियेरन् ॥ १६ ॥
अविभागाच्च शेषस्य, सर्वान् प्रति अविशिष्टत्वात् ॥
१७ ॥ ऐन्द्रवायवे तु वचनात्प्रतिकर्म्म भक्षः स्यात्
॥ १८ ॥ सोमोऽवचनाद्भक्षो न विद्यते ॥ १९ ॥
स्याद् वा अन्यार्थदर्शनात् ॥ २० ॥ वचनानि तु
अपूर्वत्वात्तस्मात् यथोपदेशं स्युः ॥ २१ ॥ चमसेषु
समाख्यानात्संयोगस्य तन्निमित्तत्वात् ॥ २२ ॥
उद्गातृचमसमेकः श्रुतिसंयोगात् ॥ २३ ॥ सर्वे वा
सर्वसंयोगात् ॥ २४ ॥ स्तोत्रकारिणां वा तत्संयो-
गाद्बहुश्रुतेः ॥ २५ ॥ सर्वे तु वेदसंयोगात् कार-
णादेकदेशे स्यात् ॥ २६ ॥ ग्रावस्तुतो भक्षो न वि-
द्यतेऽनाम्नानात् ॥ २७ ॥ हारियोजने वा सर्वसं-
योगात् ॥ २८ ॥ चमसिनां वा सन्निधानात् ॥ २९
सर्वेषां तु विधित्वात्तदर्थो चमसि श्रुतिः ॥ ३० ॥
वषट्काराच्च भक्षयेत् ॥ ३१ ॥ होमाभिषवाभ्या-
ञ्च ॥ ३२ ॥ प्रत्यक्षोपदेशाच्चमसानामव्यक्तः शेषे
॥ ३३ ॥ स्यात् वा कारणभावात् अनिर्देशश्चमसा-

नाम् कर्त्तुस्सहचनत्वात् ॥ ३४ ॥ चमसे चान्यदर्शनात् ॥ ३५ ॥ एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत् ॥ ३६ होता वा मन्त्रवर्णात् ॥ ३७ ॥ वचनाच्च ॥ ३८ ॥ कारणानुपूर्व्याच्च ॥ ३९ ॥ वचनादनुज्ञातभक्षणम् ॥ ४० ॥ तदुपहूत उपह्वयस्वेत्यनेन अनुज्ञापयेल्लिङ्गात् ॥ ४१ ॥ तत्रार्थात्प्रतिवचनम् ॥ ४२ ॥ तदेकपात्राणां समवायात् ॥ ४३ ॥ याज्यापनयेनापनीतो भक्षः प्रवरवत् ॥ ४४ ॥ यष्टुर्वा कारणागमात् ॥ ४५ ॥ प्रवृत्तत्वात् प्रवरस्यानपायः ॥ ४६ फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात् ॥ ४७ ॥ इज्याविकारो वा संस्कारस्य तदर्थत्वात् ॥ ४८ ॥ होमात् ॥ ४९ ॥ चमसैश्च तुल्यकालत्वात् ॥ ५० ॥ लिङ्गदर्शनाच्च ॥ ५१ ॥ अनुप्रसर्पिषु सामान्यात् ॥ ५२ ॥ ब्राह्मणा वा तुल्यशब्दत्वात् ॥ ५३ ॥

## तृतीये अध्याये षष्ठः पादः

सर्वार्थमप्रकरणात् ॥ १ ॥ प्रकृतौ वाऽद्विरुक्तत्वात् ॥ २ ॥ तद्वर्जन्तु वचनप्राप्ते ॥ ३ ॥ दर्श-

नादिति चेत् ॥ ४ ॥ न चोदनैकार्थ्यात् ॥ ५ ॥ उत्पत्तिरिति चेत् ॥ ६ ॥ न, तुल्यत्वात् ॥ ७ ॥ चोदनार्थकात् स्न्यात्तु मुख्यविप्रतिषेधात् प्रकृत्यर्थः ८ ॥ प्रकरणविशेषात् विकृतौ विरोधि स्यात् ॥ ९ ॥ नैमित्तिकं तु प्रकृतौ, तद्विकारः संयोगविशेषात् १० ॥ इष्ट्यर्थमग्न्याधेयं प्रकरणात् ॥ ११ ॥ न वा तासां तदर्थत्वात् ॥ १२ ॥ लिङ्गदर्शनाच्च ॥ १३ तत्प्रकृत्यर्थं यथान्येऽनारभ्य—वादाः ॥ १४ ॥ सर्वार्थं वा आधानस्य स्वकालत्वात् ॥ १५ ॥ ता॰ सामग्निः प्रकृतितः प्रयाजवत् स्यात्॥ १६ ॥ न वा तासां तदर्थत्वात् ॥ १७ ॥ तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात् ॥ १८ ॥ स्थानाच्च पूर्वस्य ॥ १९ ॥ श्वस्त्वेकेषां तत्र प्राक्श्रुतिर्गुणार्था ॥ २० ॥ तेनोत्कृष्टस्य कालविधिरिति चेत् ॥ २१ ॥ नैकदेशत्वात् ॥ २२ ॥ अर्थेनेति चेत् ॥ २३ ॥ न श्रुतिविप्रतिषेधात् ॥ २४ ॥ स्थानात्तु पूर्वस्य संस्कारस्य तदर्थत्वात् ॥ २५ ॥ लिङ्गदर्शनाच्च ॥ २६ अचोदना गुणार्थेन ॥ २७ ॥ दोहयोः कालभेदादसंयुक्तं शृतं स्यात् ॥ २८ ॥ प्रकरणाविभागाद्वा तत्संयुक्तस्य कालशास्त्रम् ॥ २९ ॥ तद्वत्स-

वनान्तरे ग्रहात्मनस् ॥ ३० ॥ रशना च लिङ्गदर्शनात् ॥ ३१ ॥ आराच्छिष्टमसंयुक्तमितरैः सन्निधानात् ॥ ३२ ॥ संयुक्तं वा तदर्थत्वाच्छेषस्य तन्निमित्तत्वात् ॥ ३३ ॥ निर्देशाद्व्यवतिष्ठेत ॥ ३४ ॥ अग्न्यङ्गमप्रकरणे तद्वत् ॥ ३५ ॥ नैमित्तिकमतुल्यत्वादसमानविधानं स्यात् ॥ ३६ ॥ प्रतिनिधिश्च तद्वत् ॥ ३७ ॥ तद्वत्प्रयोजनैकत्वात् ॥ ३८ ॥ अशास्त्रलक्षणत्वाच्च ॥ ३९ ॥ नियमार्था गुणश्रुतिः ॥ ४० संस्थास्तु समानविधानाःप्रकरणाविशेषात् ॥ ४१ ॥ व्यपदेशश्च तुल्यवत् ॥ ४२ ॥ विकारास्तु कामसंयोगे नित्यस्य समत्वात् ॥ ४३ ॥ अपि वा द्विरुक्तत्वात् प्रकृतेर्भविष्यन्तीति ॥ ४४ ॥ वचनात्तु समुच्चयः ॥ ४५ ॥ प्रतिषेधाच्च पूर्वलिङ्गानाम् ॥ ४६ गुणविशेषादेकस्य व्यपदेशः ॥ ४७ ॥

तृतीये अध्याये सप्तमः पादः

---

प्रकरणविशेषादसंयुक्तं प्रधानस्य ॥ १ ॥ सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात् ॥ २ ॥ आरादपीतिचेत् ॥ ३ न तत्, वाक्यं हि तदर्थत्वात् ॥ ४ ॥ लिङ्गदर्शना

च्च ॥ ५ ॥ फलसंयोगात्तु स्वामियुक्तं प्रधानस्य ॥ ६ ॥ चिकीर्षया च संयोगात् ॥ ७ ॥ तथाभिधानेन ॥ ८ ॥ तदुक्ते तु फलश्रुतिस्तस्मात्सर्वचिकीर्षा स्यात् ॥ ९ ॥ गुणाभिधानात् सर्वार्थमभिधानम् ॥ १० ॥ दीक्षादक्षिणन्तु वचनात् प्रधानस्य ॥ ११ निवृत्तिदर्शनाच्च ॥ १२ ॥ तथा यूपस्य वेदिः ॥ १३ देशमात्रं वा ऽशिष्येणैकवाक्यत्वात् ॥ १४ ॥ स्वामिधेनीस्तदन्वाहुरिति हविर्द्धानयोर्वचनात् सामिधेनीनाम् ॥ १५ ॥ देशमात्रं वा प्रत्यक्षं ह्यर्थकर्म सोमस्य ॥ १६ ॥ समाख्यानं च तद्वत् ॥ १७ ॥ शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् तस्मात् स्वयं प्रयोगे स्यात् १८ ॥ उत्सर्गे तु प्रधानत्वात् शेषकारी प्रधानस्य, तस्मात् अन्यः स्वयं वा स्यात् ॥ १९ ॥ अन्यो वा स्यात् परिक्रयाम्नानाद्विप्रतिषेधात्प्रत्यगात्मनि ॥ २० ॥ तत्रार्थात् कर्तृपरिमाणं स्यादनियमोऽविशेषात् ॥ २१ ॥ अपि वा श्रुतिभेदात् प्रतिनामधेयं स्युः ॥ २२ ॥ एकस्य कर्मभेदादिति चेत् ॥ २३ नोत्पत्तौ हि ॥ २४ ॥ चमसाध्वर्यवश्च तैर्व्यपदेशात् ॥ २५ ॥ उत्पत्तौ तु बहुश्रुतेः ॥ २६ ॥ दशत्वं

लिंगदर्शनात् ॥ २७ ॥ शमिता च शब्दभेदात् ॥ २८ ॥ प्रकरणाद्वोत्पत्त्यसंयोगात् ॥ २९ ॥ उपगाश्च लिंगदर्शनात् ॥ ३० ॥ विक्रयी त्वन्यः कर्मणोऽचोदितत्वात् ॥ ३१ ॥ कर्म कार्य्यात् सर्वेषां ऋत्विक्त्वमविशेषात् ॥ ३२ ॥ न वा परिसङ्ख्यानात् ॥ ३३ ॥ पक्षेणेतिचेत् ॥ ३४ ॥ न सर्वेषामनधिकारः ॥ ३५ ॥ नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् ॥ ३६ ॥ उक्त्वा च यजमानत्वं तेषां दीक्षाविधानात् ॥ ३७ ॥ स्वामिसप्तदशाः कर्मसामान्यात् ॥ ३८ ॥ ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात् ॥ ३९ ॥ तत्संयोगात् कर्मणो व्यवस्था स्यात्, संयोगस्यार्थवत्त्वात् ॥ ४० ॥ तस्योपदेशसमाख्यानेन निर्देशः ॥ ४१ ॥ तद्वच्च लिंगदर्शनम् ॥ ४२ ॥ प्रैषानुवचनं मैत्रावरुणस्योपदेशात् ॥ ४३ ॥ पुरोऽनुवाक्याधिकारो वा प्रैषसन्निधानात् ॥ ४४ ॥ प्रातरनुवाके च होतृदर्शनात् ॥ ४५ ॥ चमसांश्चमसाध्वर्य्यवः समाख्यानात् ॥ ४६ ॥ अध्वर्युर्वा तन्न्यायत्वात् ॥ ४७ ॥ चमसे चान्यदर्शनात् ॥ ४८ ॥ अशक्तौ ते प्रती

येरन् ॥ ४९ ॥ वेदोपदेशात् पूर्ववद्वेदान्यत्वे यथोप देशं स्युः ॥ ५० ॥ तद्ग्रहणाद्वा स्वधर्मः स्यादधि कारसामर्थ्यात् सहाँगैरव्यक्तःशेषे ॥ ५१ ॥

॥ तृतीये अध्याये अष्टमः पादः ॥

स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात् ॥ १ ॥ वचनादितरेषां स्यात् ॥ २ ॥ संस्कारास्तु पुरुष सामर्थ्ये यथावेदं कर्मवद्व्यवतिष्ठेरन् ॥ ३ ॥ याज मानास्तु तत्प्रधानत्वात्कर्मवत् ॥ ४ ॥ व्यपदेशा च्च ॥ ५ ॥ गुणत्वे तस्य निर्देशः ॥ ६ ॥ चोदनां प्रति भावाच्च ॥ ७ ॥ अतुल्यत्वादसमानविधानाः स्युः ॥ ८ ॥ तपश्च फलसिद्धित्वाल्लोकवत् ॥ ९ ॥ वाक्यशेषश्च तद्वत् ॥ १० ॥ वचनादितरेषां स्यात् ॥ ११ ॥ गुणत्वाच्च वेदेन न व्यवस्था स्यात् ॥ १२ ॥ तथा कामोऽर्थसंयोगात् ॥ १३ ॥ व्यप- देशादितरेषां स्यात् ॥ १४ ॥ मन्त्राश्चाकर्मकरणास्त- द्वत् ॥ १५ ॥ विप्रयोगे च दर्शनात् ॥ १६ ॥ द्वा- म्नातेषूभौ द्वाम्नानस्यार्थवत्त्वात् ॥ १७ ॥ ज्ञाते च वाचनं न ह्यविद्वान्विहितोऽस्ति ॥ १८ ॥ याजमाने

समाख्यानात्कर्माणि याजमानं स्युः ॥ १९ ॥ अध्वर्युर्वा तदर्थो हि न्यायपूर्वं समाख्यानम् ॥ २० ॥ विप्रतिषेधे करणः, समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात् ॥ २१ ॥ प्रैषेषु च पराधिकारात् ॥ २२ ॥ अध्वर्युस्तु दर्शनात् ॥ २३ ॥ गौणो वा कर्मसामान्यात् ॥ २४ ॥ ऋत्विक्फलं करणेष्वर्थवत्त्वात् ॥ २५ ॥ स्वामिनो वा तदर्थत्वात् ॥ २६ लिङ्गदर्शनाच्च ॥ २७ ॥ कर्मार्थन्तु फलन्तेषां स्वामिनं प्रत्यर्थवत्त्वात् ॥ २८ ॥ व्यपदेशाच्च ॥ २९ ॥ द्रव्य संस्कारः प्रकरणाविशेषात् सर्वकर्मणाम् ॥ ३० ॥ निर्देशात्तु विकृतावपूर्वस्यानधिकारः ॥ ३१ ॥ विरोधे च श्रुतिविशेषादव्यक्तः शेषे ॥ ३२ ॥ अपनयस्त्वेकदेशस्य विद्यमानसंयोगात् ॥ ३३ ॥ विकृतौ सर्वार्थः शेषः प्रकृतिवत् ॥ ३४ ॥ मुख्यार्थो वा अङ्गस्या चोदितत्वात् ॥ ३५ ॥ सन्निधानविशेषादसम्भवे तदङ्गानाम् ॥ ३६ ॥ आधानेऽपि तथेति चेत् ॥ ३७ नाप्रकरणत्वादङ्गस्य तन्निमित्तत्वात् ॥ ३८ ॥ तत्काले वा लिङ्गदर्शनात् ॥ ३९ ॥ सर्वेषां वा अविशेषात् ॥ ४० ॥ न्यायोक्ते लिंगदर्शनम् ॥ ४१ ॥ मांसन्तु सवनीयानाम् चोदनाविशेषात् ॥ ४२ ॥

भक्तिरसन्निधावन्यार्थेति चेत् ॥ ४३ ॥ स्यात् प्रकृतिलिंगत्वात् वैराजवत् ॥ ४४ ॥

॥ चतुर्थे अध्याये प्रथमः पादः ॥

अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ॥ १ ॥ यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात् ॥ २ ॥ तदुत्सर्गे कर्माणि पुरुषार्थाय, शास्त्रस्यान-तिशङ्कत्वान्नच द्रव्यं चिकीर्ष्यते तेनार्थेनाभिसम्ब-न्धात् क्रियायां पुरुषश्रुतिः ॥ ३ ॥ अविशेषात्तु, शास्त्रस्य यथाश्रुतिफलानि स्युः ॥ ४ ॥ अपि वा कारणाग्रहणे तदर्थमर्थस्यानभिसम्बन्धात् ॥ ५ ॥ तथा च लोकभूतेषु ॥ ६ ॥ द्रव्याणि त्वविशेषेणान र्थक्यात् प्रदीयेरन् ॥ ७ ॥ स्वेन त्वर्थेन सम्बन्धो द्रव्याणां पृथगर्थत्वात्, तस्मात् यथाश्रुति स्युः ॥ ८ चोदन्ते चार्थकर्मसु ॥ ९ ॥ लिंगदर्शनाच्च ॥ १० ॥ तत्रैकत्वमयज्ञांगमर्थस्य गुणभूतत्वात् ॥ ११ ॥ एक श्रुतित्वाच्च ॥ १२ ॥ प्रतीयते इति चेत् ॥ १३ ॥ नाशब्दं तत्प्रमाणत्वात् पूर्ववत् ॥ १४ ॥ शब्दव-त्तूपलभ्यते तदागमे हि तत् दृश्यते तस्यज्ञानं यथा

न्येषाम् ॥ १५ ॥ तद्वच्च लिंगदर्शनम् ॥ १६ ॥ तथा च लिंगम् ॥ १७ ॥ आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत ॥ १८ ॥ चोदनायान्त्वनारम्भो विभक्तत्वान्न ह्यन्येन विधीयते ॥ १९ ॥ स्याद्वा द्रव्यचिकीर्षायां भावोऽर्थे च गुणभूतताऽऽश्रयाद्धि गुणीभावः ॥ २० अर्थे समवैषम्यतो द्रव्यकर्मणाम् ॥ २१ ॥ एकनिष्पत्तेः सर्वं समं स्यात् ॥ २२ ॥ संसर्गरसनिष्पत्तेरामिक्षा वा प्रधानं स्यात् ॥ २३ ॥ मुखत्वशब्दाभिसंस्तवाच्च ॥ २४ ॥ पदकर्माप्रयोजकं नयनस्य परार्थत्वात् ॥ २५ ॥ अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तत्वात्तदर्थो हि विधीयते ॥ २६ ॥ पश्वानालम्भाल्लोहितशकृतोरकर्मत्वम् ॥ २७ ॥ एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात् ॥ २८ ॥ निर्देशात्तस्यान्यदर्थादिति चेत् ॥ २९ ॥ न शेषसन्निधानात् ॥ ३० ॥ कर्मकार्यात् ॥ ३१ ॥ लिंगदर्शनाच्च ॥ ३२ ॥ अभिघारणे विप्रकर्षादनुयाजवत्पात्रभेदः स्यात् ॥ ३३ ॥ न वाऽपात्रत्वादपात्रत्वन्त्वेकदेशत्वात् ॥ ३४ ॥ हेतुत्वाच्च सहप्रयोगस्य ॥ ३५ ॥ अभावदर्शनाच्च ॥ ३६ ॥ सति सव्यवचनम् ॥ ३७ ॥ न तस्येति चेत् ॥ ३८ ॥ स्यात्तस्य मुख्यत्वात् ॥ ३९ ॥

समानयनन्तु मुख्यं स्यात् लिंगदर्शनात् ॥ ४० ॥ वचने हि हेत्वसामर्थ्ये ॥ ४१ ॥ तदोत्पत्तिरविभक्ता स्यात् ॥ ४२ ॥ तत्र जौहवमनुयाजप्रतिषेधार्थम् ॥ ४३ ॥ औपभृतं तथेति चेत् ॥ ४४ ॥ स्यात जुह्वप्रतिषेधान्नित्यानुवादः ॥ ४५ ॥ तदष्टसंख्यं श्रवणात् ॥ ४६ ॥ अनुग्रहाच्च जौहवस्य ॥ ४८ ॥ द्वयोस्तु हेतुसामर्थ्यं श्रवणं च समानयने ॥ ४८ ॥

## चतुर्थे अध्याये द्वितीयः पादः

स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ॥ १ ॥ जात्यन्तराच्च शङ्कते ॥ २ ॥ तदेकदेशो वा स्वरुत्वस्य तन्निमित्तत्वात् ॥ ३ ॥ शकलश्रुतेश्च ॥ ४ ॥ प्रतियूपं च दर्शनात् ॥ ५ ॥ आदाने करोतिशब्दः ॥ ६
स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ॥ १ ॥ जात्यन्तराच्च शङ्कते ॥ २ ॥ तदेकदेशो वा स्वरुत्वत्तस्य तन्निमित्वात् ॥ ३ ॥ शकलश्रुतेश्च ॥ ४ ॥ प्रतियूपं च दर्शनात् ॥ ५ ॥ आदाने करोति शब्दः ॥ ६ ॥ शाखायां तत्प्रधानत्वात् ॥ ७ ॥ शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद्वैषम्यं तत्

॥ ८ ॥ अतुल्यपायाच्च ॥ ९ ॥ हरणे तु जुहोतिर्यो-गसामान्यात् द्रव्याणां चार्थशेषत्वात् ॥ १० ॥ प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वात् ॥ ११ ॥ अर्थेऽपीति चेत् ॥ १२ ॥ न, तस्यानधिकारादर्थस्य च कृतत्वात् ॥ १३ ॥ उत्पत्त्यसंयोगात् प्रणीतानामाज्यवद्विभागः स्यात् ॥ १४ ॥ संयवनार्थानां वा प्रतिपत्तिरितरासां तत्प्रधानत्वात् ॥ १५ ॥ प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात् ॥ १६ ॥ अर्थकर्म वा कर्तृसंयोगात् स्रग्वत् ॥ १७ ॥ कर्मयुक्ते च दर्शनात् ॥ १८ ॥ उत्पत्तौ येन संयुक्तं तदर्थं तत् श्रुतिहेतुत्वात्तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिः स्यात् ॥ १९ ॥ सौमिके च कृतार्थत्वात् ॥ २० ॥ अर्थकर्म वाभिधानसंयोगात् ॥ २१ ॥ प्रतिपत्तिर्वा तन्न्यायत्वाद्देशार्थावभृथश्रुतिः ॥ २२ ॥ कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात् ॥ २३ ॥ नियमार्था वा श्रुतिः ॥ २४ ॥ तथा द्रव्येषु गुणश्रुतिरुत्पत्तिसंयोगात् ॥ २५ ॥ संस्कारे च तत्प्रधानत्वात् ॥ २६ ॥ यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् ॥ २७ ॥ तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात् ॥ २८ ॥ विधेः कर्मापव-

गित्वादर्थान्तरे विधिप्रदेशः स्यात् ॥ २९ ॥ अपि वोत्पत्तिसंयोगादर्थसम्बन्धोऽविशिष्टानां प्रयोगैकत्व-हेतुः स्यात् ॥ ३० ॥

चतुर्थे अध्याये तृतीयः पादः

द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात् ॥ १ ॥ उत्पत्तेश्चातत्प्रधानत्वात् ॥ २ ॥ फलन्तु तत्प्रधानायाम् ॥ ३ ॥ नैमित्तिके विकार-त्वात् क्रतुप्रधानमन्यत् स्यात् ॥ ४ ॥ एकस्य तूभयत्वे संयोगपृथक्त्वम् ॥ ५ ॥ शेषः इति चेत् ॥ ६ ॥ नार्थपृथक्त्वात् ॥ ७ ॥ द्रव्याणान्तु क्रियार्था-नां संस्कारः क्रतुधर्मः स्यात् ॥ ८ ॥ पृथक्त्वाद्व्यव-तिष्ठेत ॥ ९ ॥ चोदनायां फलाश्रुतेः कर्ममात्रं विधीयेत नह्यशब्दं प्रतीयते ॥ १० ॥ अपि वाऽऽम्नान सामर्थ्याच्चोदनाऽर्थेन गम्येतार्थानां ह्यर्थवत्त्वेन वचनानि प्रतीयन्तेऽर्थतोह्यसमर्थानामानन्तर्य्येऽप्य सम्बन्धः तस्माच्छ्रुत्येकदेशः सः ॥ ११ ॥ वाक्यार्थश्च गुणार्थवत् ॥ १२ ॥ तत्सर्वार्थमनादेशात् ॥ १३ ॥ एकं वा चोदनैकत्वात् ॥ १४ ॥ सर्वर्गः स्यात्,

सर्व्वान् प्रत्यविशिष्टत्वात् ॥ १५ ॥ प्रत्ययाच्च ॥ १६ ॥ क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः ॥ १७ ॥ फलमात्रेयो निर्द्देशादश्रुतौ ह्यनुमानं स्यात् ॥ १८ ॥ अङ्गेषु स्तुतिः परार्थत्वात् ॥ १९ ॥ काम्ये कर्म्मणि नित्यः स्वर्गो यथा यज्ञाङ्गे क्रत्वर्थः ॥ २० ॥ वीते च कारणे नियमात् ॥ २१ ॥ कामो वा तत्संयोगेन चोद्यते ॥ २२ ॥ अङ्गे गुणत्वात् ॥ २३ ॥ वीते च नियमस्तदर्थम् ॥ २४ ॥ सार्व्वका-म्यमंगकामैः प्रकरणात् ॥ २५ ॥ फलोपदेशो वा प्रधानशब्दसंप्रयोगात् ॥ २६ ॥ तत्र सर्वेऽविशेषात् ॥ २७ ॥ योगसिद्धिर्वार्थस्योत्पत्त्यसंयोगित्वात् ॥ २८ समवाये चोदनासंयोगस्यार्थवत्वात् ॥ २९ ॥ कालश्रुतौ काल इति चेत् ॥ ३० ॥ नासमवायात् प्रयोजनेन स्यात् ॥ ३१ ॥ उभयार्थमिति चेत् ॥ ३२ ॥ न शब्दैकत्वात् ॥ ३३ ॥ प्रकरणादिति चेत् ॥ ३४ ॥ नोत्पत्तिसंयोगात् ॥ ३५ ॥ अनुत्पत्तौ तु कालः स्यात्प्रयोजनेन सम्बन्धात् ॥ ३६ ॥ उत्पत्तिकालविषये कालः स्याद्वाक्यस्य तत्प्रधानत्वात् ॥ ३७ ॥ फलसंयोगस्त्वचोदिते

न स्यादशेषभूतत्वात् ॥ ३८ ॥ अंगानान्तु प्रधान संयोगो निमित्तार्थः ॥ ३९ ॥ प्रधानेनाभिसंयोगादङ्गानां मुख्यकालत्वम् ॥ ४० ॥ अपवृत्ते तु चोदना तत्सामान्यात् स्वकाले स्यात् ॥ ४१ ॥

## चतुर्थे अध्याये चतुर्थः पादः

प्रकरणशब्दसामान्यात् चोदनानामनंगत्वम् ॥ १ ॥ अपि वाङ्गमनिज्याः स्युस्ततो विशिष्टत्वात् ॥ २ मध्यस्थं यस्य तन्मध्ये ॥ ३ ॥ सर्व्वासां वा समत्वाच् चोदनातः स्यान्नहि तस्य प्रकरणं देशार्थमुच्यते मध्ये ॥ ४ ॥ प्रकरणाविभागे च विप्रतिषिद्धं ह्युभयम् ॥ ५ ॥ अपि वा कालमात्रं स्याद्दर्शनाद्विशेषस्य ॥ ६ ॥ फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात् ॥ ७ ॥ दधिग्रहो नैमित्तिकः श्रुतिसंयोगात् ॥ ८ ॥ नित्यश्च ज्येष्ठशब्दात् ॥ ९ ॥ नाबैरूप्याच् च ॥ १० ॥ नित्यो वा स्यादर्थवादस्तयोः कर्म्मण्यसम्बन्धाद्भङ्गित्वाच् चान्तरायस्य ॥ ११ वैश्वानरश्च नित्यः स्यान्नित्यैः समानसङ्ख्यात्वात् ॥ १२ ॥ पक्षे वोत्पन्नसंयोगात् ॥ १३ ॥ षट्चि-

तिः पूर्ववत्त्वात् ॥ १४ ॥ ताभिश्च तुल्यसङ्ख्यानात् ॥ १५ ॥ अर्थवादोपपत्तेश्च ॥ १६ ॥ एकचितिर्वा स्यादपवृक्ते हि चोद्यते निमित्तेन ॥ १७ ॥ विप्रतिषेधात्ताभिः समानसङ्ख्यत्वम् ॥ १८ ॥ पितृयज्ञः स्वकालत्वादनङ्गं स्यात् ॥ १९ ॥ तुल्यवच्च प्रसङ्ख्यानात् ॥ २० ॥ प्रतिषिद्धे च दर्शनात् ॥ २१ ॥ पश्वङ्गं रशना स्यात्तदागमे विधानात् ॥ २२ ॥ यूपाङ्गं वा तत्संस्कारात् ॥ २३ ॥ अर्थवादश्च तदर्थवत् ॥ २४ ॥ स्वरुस्त्वनेकनिष्पन्नत्वात् स्वकर्म्मशब्दत्वात् ॥ २५ ॥ निष्क्रयश्च तदङ्गवत् ॥ २६ ॥ पश्वङ्गं वार्थकर्म्मत्वात् ॥ २७ ॥ भक्त्या निष्क्रयवादः स्यात् ॥ २८ ॥ दर्शपूर्णमासयोरिज्याः प्रधानान्यविशेषात् ॥ २९ ॥ अपि वाङ्गानि कानिचित् येष्वङ्गत्वेन संस्तुतिः सामान्योह्यभिसंस्तवः ॥ ३० ॥ तथा चान्यार्थदर्शनम् ॥ ३१ ॥ अवशिष्टन्तु कारणं प्रधानेषु गुणस्य विद्यमानत्वात् ॥ ३२ ॥ नानुक्तेऽन्यार्थदर्शनं परार्थत्वात् ॥ ३३ ॥ पृथक्त्वे त्वभिधानयोर्निवेशः, श्रुतितो व्यपदेशाच्च, तत्पुनर्मुख्यलक्षणं यत्फलवत्त्वं तत्सन्निधावसंयुक्तं तदङ्गं स्यात्, भागित्वात् कारणस्याश्रुतश्चान्यसम्बन्धः ॥ ३४ ॥ गुणाश्च नामसंयु-

क्ता विधीयन्ते नाङ्गेषूपपद्यन्ते ॥ ३५ ॥ तुल्या च कारणश्रुतिरन्यैरङ्गाङ्गिसम्बन्धः ॥ ३६ ॥ उत्पत्तावभिसम्बन्धस्तस्मादङ्गोपदेशः स्यात् ॥ ३७ तथा चान्यार्थदर्शनम् ॥ ३८ ॥ ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम् ॥ ३९ ॥ गुणानान्तूत्पत्तिवाक्येन सम्बन्धात्कारणश्रुतिस्तस्मात्सोमः प्रधानं स्यात् ॥ ४० ॥ तथा चान्यार्थदर्शनात् ॥ ४१ ॥

पञ्चमे अध्याये प्रथमः पादः

श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात् ॥ १ ॥ अर्थाच्च ॥ २ ॥ अनियमोऽन्यत्र ॥ ३ ॥ क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात् ॥ ४ ॥ अशाब्द इति चेत्, स्याद्वाक्यशब्दत्वात् ॥ ५ ॥ अर्थकृते वानुमानं स्यात्, क्रत्वेकत्वे परार्थत्वात् स्वेन त्वर्थेन सम्बन्धः, तस्मात्स्वशब्दमुच्येत ॥ ६ ॥ तथा चान्यार्थदर्शनम् ॥ ७ ॥ प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् ॥ ८ ॥ सर्व्वमिति चेत् ॥ ९ ॥ नाकृतत्वात् ॥ १० ॥ क्रत्वन्तरवदिति चेत् ॥ ११ ॥ नासमवायात् ॥ १२ ॥ स्थानाच्चोत्पत्तिसंयोगात्

॥ १३ ॥ मुख्यक्रमेण वाङ्गानां तदर्थत्वात् ॥ १४ प्रकृतौ तु स्वशब्दत्वात् यथाक्रमं प्रतीयेत ॥ १५ ॥ मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात् तस्मात् उत्पत्तिदेशः सः ॥ १६ ॥ तद्वचनाद्विकृतौ यथा प्रधानं स्यात् ॥ १७ ॥ विप्रतिपत्तौ वा प्रकृत्यन्वया-द्यथाप्रकृति ॥ १८ ॥ विकृतिः प्रकृतिधर्मत्वात्तत् काला: स्याद्यथाशिष्टम् ॥ १९ ॥ अपि वा क्रमकाल संयुक्ता सद्यः क्रियेत तत्र विधेरनुमानात् प्रकृति धर्मलोपः स्यात् ॥ २० ॥ कालोत्कर्ष इति चेत् ॥ २१ ॥ न तत्सम्बन्धात् ॥ २२ ॥ अङ्गानां मुख्य कालत्वाद्यथोक्तमुत्कर्षे स्यात् ॥ २३ ॥ तदादि वाभिसम्बन्धात्तदन्तमपकर्षे स्यात् ॥ २४ ॥ प्रवृ-त्त्या कृतकालानाम् ॥ २५ ॥ शब्दविप्रतिषेधाच्च ॥ २६ ॥ असंयोगात्तु वैकृतं तदेव प्रतिकृष्येत ॥ २७ ॥ प्रासङ्गिकं च नोत्कर्षेदसंयोगात् ॥ २८ तथाऽपूर्वम् ॥ २९ ॥ साम्नपनीया तूत्कर्षेदग्नि-होत्रं सवनवद्वैगुण्यात् ॥ ३० ॥ अव्यवायाच्च ॥ ३१ असम्बन्धात्तु नोत्कर्षेत् ॥ ३२ ॥ प्रापणाच्च नि-मित्तस्य ॥ ३३ ॥ सम्बन्धात् सवनोत्कर्षः ॥ ३४ षोडशी चोक्थ्यसंयोगात् ॥ ३५ ॥

## पञ्चमे अध्याये द्वितीयः पादः

सन्निपाते प्रधानानामेकैकस्य गुणानां सर्व्वकर्म्म स्यात् ॥ १ ॥ सर्वेषां वैकजातीयं कृतानुपूर्वत्वात् ॥ २ ॥ कारणादभ्यावृत्तिः ॥ ३ ॥ मुष्टिकपाला-वदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन ॥ ४ ॥ सर्व्वाणि त्वेककार्य्यत्वादेषां तद्गुणत्वात् ॥ ५ ॥ संयुक्ते तु प्रक्रमात्तदङ्गं स्यादितरस्य तदर्थत्वात् ॥ ६ ॥ वचनात्तु परिव्याणान्तमञ्जनादि स्यात् ॥ ७ कारणाद्वानवसर्गः स्यात् यथा पात्रवृद्धिः ॥ ८ ॥ न वा शब्दकृतत्वान्न्यायमात्रमितरदर्थात्पात्रविवृद्धिः ॥ ९ ॥ पशुगणे तस्य तस्यापवर्जयेत् पशूकत्वात् ॥ १० ॥ दैवतैर्वैककर्म्यात् ॥ ११ ॥ मन्त्रस्य चार्थ-वत्त्वात् ॥ १२ ॥ नानाबीजेष्वेकमुलूखलं विभवात् ॥ १३ ॥ विवृद्धिर्वा नियमानुपूर्वस्य तदर्थत्वात् ॥ १४ ॥ एकं वा तण्डुलभावाद्धन्तेस्तदर्थत्वात् ॥ १५ ॥ विकारे त्वनुयाजानां पात्रभेदोऽर्थभेदात् स्यात् ॥ १६ ॥ प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यान्न ह्यचोदितस्य शेषाम्नानम् ॥ १७ ॥ मुखानन्तर्य्यमा-त्रेयस्तेन तुल्यश्रुतित्वादशब्दत्वात् प्राकृतानाम् व्य-

न्यायः स्यात् ॥ १८ ॥ अन्ते तु वादरायणस्तेषां प्रधानशब्दत्वात् ॥ १९ ॥ तथा चान्यार्थदर्शनम् ॥ २० ॥ कृतदेशात्तु पूर्वेषां स देशःस्यात्तेन प्रत्यक्षसंयोगात् न्यायमात्रमितरत् ॥ २१ ॥ प्राकृताच्च पुरस्ताद्यत् ॥ २२ ॥ सन्निपातश्चेत् यथोक्तमन्ते स्यात् ॥ २३ ॥

## पञ्चमे अध्याये तृतीयः पादः

विवृद्धिः कर्म्मभेदात्पृषदाज्यवत्तस्य तस्योपदिश्येत ॥ १ ॥ अपि वा सर्व्वसङ्ख्यत्वाद्विकारः प्रतीयेत ॥ २ ॥ स्वस्थानात्तु विवृध्येरन् कृतानुपूर्व्यत्वात् ॥ ३ ॥ समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युर्द्यावापृथिव्योरन्तराले समर्हणात् ॥ ४ ॥ तच्छब्दो वा ॥ ५ ॥ उष्णिक्ककुभोरन्ते दर्शनात् ॥ ६ ॥ स्तोमविवृद्धौ वहिष्पवमाने पुरस्तात्पर्य्यासादागन्तवः स्युस्तथाहि दृष्टं द्वादशाहे ॥ ७ पर्य्यास इति चान्ताख्या ॥ ८ ॥ अन्ते वा तदुक्तम् ॥ ९ ॥ वचनात्तु द्वादशाहे ॥ १० ॥ अतद्विकारश्च ॥ ११ ॥ तद्विकारेऽप्यपूर्व्वत्वात् ॥ १२ ॥ अन्ते

तूत्तरयोर्द्दध्यात् ॥ १३ ॥ अपि वा गायत्री-बृहत्यनुष्टुप्सु वचनात् ॥ १४ ॥ ग्रहेष्टकमौपानुवाक्यं सवनचितिशेषः स्यात् ॥ १५ ॥ क्रत्वग्निशेषो वा चोदितत्वादचोदनानुपूर्व्वस्य ॥ १६ ॥ अन्ते स्युरव्यवायात् ॥ १७ ॥ लिङ्गदर्शनाच्च ॥ १८ ॥ मध्यमायान्तु वचनात् ब्राह्मणवत्यः ॥ १९ ॥ प्राग्लोकम्पृणायास्तस्याः सम्पूरणार्थत्वात् ॥ २० ॥ संस्कृते कर्म्म संस्काराणान्तदर्थत्वात् ॥ २१ ॥ अनन्तरं व्रतं तद्भूतत्वात् ॥ २२ ॥ पूर्व्वं च लिङ्गदर्शनात् ॥ २३ ॥ अर्थवादो वा अर्थस्य विद्यमानत्वात् ॥ २४ ॥ न्यायविप्रतिषेधाच्च ॥ २५ ॥ सञ्चिते त्वग्निचिद्युक्तं प्रापणान्निमित्तस्य ॥ २६ ॥ क्रत्वन्ते वा प्रयोगवचनाभावात् ॥ २७ ॥ अग्नेः कर्मत्वनिर्द्देशात् ॥ २८ ॥ परेणावेदनाद्दीक्षितः स्यात्सर्व्वैर्दीक्षाभिसम्बन्धात् ॥ २९ ॥ इष्ट्यन्ते वा तदर्था ह्यविशेषार्थसम्बन्धात् ॥ ३० ॥ समाख्यानं च तद्वत् ॥ ३१ ॥ अङ्गवत् क्रतूनामानुपूर्व्यम् ॥ ३२ ॥ न वासम्बन्धात् ॥ ३३ काम्यत्वाच्च ॥ ३४ ॥ आनर्थक्यान्नेति चेत् ॥ ३५ स्यादुद्व्यार्थत्वाद्यथा परेषु सर्वस्वारात् ॥ ३६ ॥

ये एतेनेत्यग्निष्टोमः प्रकरणात् ॥ ३७ ॥ लिंगाच्च ॥ ३८ ॥ अथान्येनेति संस्थानाम् सन्निधानात् ॥ ३९ ॥ तत्प्रकृतेर्वापत्तिविहारौ हि न तुल्येषू पद्येते ॥ ४० ॥ प्रशंसा वा विहरणाभावात् ॥ ४१ विधिप्रत्ययाद्वा नह्यकस्मात्प्रशंसा स्यात् ॥ ४२ ॥ एकस्तोमे वा क्रतुसंयोगात् ॥ ४३ ॥ सर्व्वेषां वा चोदनाविशेषात् प्रशंसा स्तोमानाम् ॥ ४४ ॥

पञ्चमे अध्याये चतुर्थःपादः ।

—:०:—

क्रमको योऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च ॥ १ ॥ अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् ॥ २ ॥ यथाप्रदानं वा तदर्थत्वात् ॥ ३ ॥ लिङ्गदर्शनाच्च ॥ ४ ॥ वचनादिष्टिपूर्वत्वम् ॥ ५ सोमश्चैकेषामग्न्याधेयस्यर्तु नक्षत्रातिक्रमवचनात् तदन्तेनानर्थकं हि स्यात् ॥ ६ ॥ तदर्थवचनाच्च नाविशेषात्तदर्थत्वम् ॥ ७ ॥ अयक्ष्यमाणस्य च पवमानहविषां कालनिर्देशात् आनन्तर्यादिशङ्का स्यात् ॥ ८ ॥ इष्टिरयक्ष्यमाणस्य, तादर्थ्ये सोमपूर्वत्वम् ॥ ९ ॥ उत्कर्षात् ब्राह्मणस्य सोमः स्यात् ॥ १० ॥

पौर्णमासी वा श्रुतिसंयोगात् ॥ ११ ॥ सर्वस्य वैककर्म्यात् ॥ १२ ॥ स्याद्वा विधिस्तदर्थेन ॥ १३ ॥ प्रकरणात्तु कालः स्यात् ॥ १४ ॥ स्वकाले स्यादविप्रतिषेधात् ॥ १५ ॥ अपनयो वाधानस्य सर्वकालत्वात् ॥ १६ ॥ पौर्णमास्यूर्द्धं सोमात् ब्राह्मणस्य वचनात् ॥ १७ ॥ एवं शब्दसामर्थ्यात् प्राक् क्लृप्तविधानात् ॥ १८ ॥ पुरोडाशस्त्वनिर्देशे तद्युक्ते देवताभावात् ॥ १९ ॥ आज्यमपीति चेत् ॥ २० ॥ न मिश्रदेवतत्वादैन्द्राग्नवत् ॥ २१ ॥ विकृतेः प्रकृतिकालत्वात्सद्यस्कालोत्तरा विकृतिः तयोः प्रत्यक्षशिष्टत्वात् ॥ २२ ॥ द्वैयहकाल्ये तु यथा न्यायम् ॥ २३ ॥ वचनाद्वैककाल्यं स्यात् ॥ २४ ॥ सान्नाय्याग्नीषोमीयविकारा ऊर्द्धं सोमात् प्रकृतिवत् ॥ २५ ॥ तथा सोमविकारा दर्शपूर्णमासाभ्याम् ॥ २६ ॥

षष्टे अध्याये प्रथमः पादः ।

—❀—

द्रव्याणां कर्म्मसंयोगे गुणत्वेनाभिसम्बन्धः ॥ १ ॥ असाधकं तु तादर्थ्यात् ॥ २ ॥ प्रत्यर्थं चाभिसंयो

शात् कर्म्मतो ह्यभिसम्बन्धः तस्मात् कर्मोपदेशः स्यात् ॥ ३ ॥ फलार्थत्वात् कर्म्मणः शास्त्रं सर्व्वाधिकारं स्यात् ॥ ४ ॥ कर्तुर्वा श्रुतिसंयोगाद्विधिः कात्स्न्येन गम्यते ॥ ५ ॥ लिङ्गविशेषनिर्द्देशात् पुंयुक्तमैतिशायनः ॥ ६ ॥ तदुक्तित्वाच्च दोषश्रुतिरविज्ञाते ॥ ७ ॥ जातिं तु बादरायणोऽविशेषात्, तस्मात् स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात् ॥ ८ चोदितत्वात् यथाश्रुति ॥ ९ ॥ द्रव्यवत्त्वात्तु पुंसां स्यात्, द्रव्यसंयुक्तं क्रयविक्रयाभ्याम् अद्रव्यत्वं स्त्रीणां द्रव्यैः समानयोगित्वात् ॥ १० ॥ तथा च अन्यार्थदर्शनम् ॥ ११ ॥ तादर्थ्यात्कर्मतादर्थ्यम् ॥ १२ ॥ फलोत्साहाविशेषात्तु ॥ १३ ॥ अर्थेन च समवेतत्वात् ॥ १४ ॥ क्रयस्य धर्ममात्रत्वम् ॥ १५ ॥ स्ववत्तामपि दर्शयति ॥ १६ ॥ स्ववतोस्तु वचनादैककर्म्यं स्यात् ॥ १७ ॥ लिङ्गदर्शनाच्च ॥ १८ ॥ क्रीतत्वात्तु भक्त्या स्वामित्वमुच्यते ॥ १९ ॥ फलार्थित्वात्तु स्वामित्वेनाभिसम्बन्धः ॥ २० ॥ फलवत्तां च दर्शयति ॥ २१ ॥ द्व्याधानं च द्वियज्ञवत् ॥ २२ ॥ गुणस्य तु विधानत्वात् पत्न्या द्वितीय शब्दः स्यात् ॥ २३ ॥ तस्या यावदुक्तमाशीर्ब्रह्म

चर्य्यमतुल्यत्वात् ॥ २४ ॥ चातुर्वर्ण्यमविशेषात् ॥ २५ ॥ निर्देशाद्वा त्रयाणां स्यादग्न्याधेये ह्यसम्बन्धः क्रतुषु ब्राह्मणश्रुतिरित्यात्रेयः ॥ २६ ॥ निमित्तार्थेन वादरिः तस्मात् सर्व्वाधिकारं स्यात् ॥ २७ अपि वान्यार्थदर्शनात् यथाश्रुति प्रतीयेत ॥ २८ ॥ निर्देशात्तु पक्षे स्यात् ॥ २९ ॥ वैगुण्यान्नेतिचेत् ॥ ३० ॥ न काम्यत्वात् ॥ ३१ ॥ संस्कारे च तत्प्रधानत्वात् ॥ ३२ ॥ अपि वा वेदनिर्देशादपशूद्राणां प्रतीयेत ॥ ३३ ॥ गुणार्थित्वान्नेति चेत् ॥ ३४ ॥ संस्कारस्य तदर्थत्वात् विद्यायां पुरुषश्रुतिः ॥ ३५ ॥ विद्यानिर्देशान्नेति चेत् ॥ ३६ ॥ अवैद्यत्वादभावः कर्मणि स्यात् ॥ ३७ ॥ तथा चान्यार्थदर्शनम् ॥ ३८ ॥ त्रयाणां द्रव्यसम्पन्नः कर्मणो द्रव्यसिद्धित्वात् ॥ ३९ ॥ अनित्यत्वात्तु, नैवं स्यादर्थाद्धि द्रव्यसंयोगः ॥ ४० ॥ अङ्गहीनश्च तद्धर्मा ॥ ४१ ॥ उत्पत्तौ नित्यसंयोगात् ॥ ४२ ॥ अ-त्रार्षेयस्य हानं स्यात् ॥ ४३ ॥ वचनाद्रथकारस्याधानेऽस्य सर्व्वशेषत्वात् ॥ ४४ ॥ न्याय्यो वा कर्म्मसंयोगात् शूद्रस्य प्रतिषिद्धत्वात् ॥ ४५ ॥ अकर्म्मत्वात्तु, नैवं स्यात् ॥ ४६ ॥ आनर्थक्यं च

संयोगात् ॥ ४७ ॥ गुणार्थेनेति चेत् ॥ ४८ ॥ उक्तमनिमित्तत्वम् ॥ ४९ ॥ सौधन्वनास्तु हीनत्वात् मन्त्रवर्णात्प्रतीयेरन् ॥ ५० ॥ स्थपतिर्निषादः स्यात् शब्दसामर्थ्यात् ॥ ५१ ॥ लिङ्गदर्शनाच्च ॥ ५२ ॥

---

## षष्ठे अध्याये द्वितीयः पादः

पुरुषार्थैकसिद्धित्वात् तस्य तस्याधिकारः स्यात् ॥ १ ॥ अपि चोत्पत्तिसंयोगो यथा स्यात् सत्वदर्शनं, तथा भावो विभागे स्यात् ॥ २ ॥ प्रयोगे पुरुषश्रुतेः यथाकामी प्रयोगे स्यात् ॥ ३ ॥ प्रत्यर्थं श्रुतिभाव इति चेत् ॥ ४ ॥ तादर्थ्ये न गुणार्थताऽनुक्तेऽर्थान्तरत्वात् कर्तुः प्रधानभूतत्वात् ॥ ५ ॥ अपि वा कामसंयोगे सम्बन्धात्प्रयोगायोपदिश्येत, प्रत्यर्थं हि विधिश्रुतिर्विशाखावत् ॥ ६ ॥ अन्यस्य स्यादिति चेत् ॥ ७ ॥ अन्यार्थे नाभिसम्बन्धः ॥ ८ ॥ फलकामो निमित्तमिति चेत् ॥ ९ ॥ न नित्यत्वात् ॥ १० ॥ कर्म तथेति चेत् ॥ ११ ॥ न समवायात् ॥ १२ ॥ प्रक्रमात्तु, नियम्येतारम्भस्य क्रियानिमित्तत्वात् ॥ १३ ॥ फलार्थित्वाद्वाऽनियमो

ज्यया निगमाः स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात् ॥ ५५ ॥ दधि वा स्यात् प्रधानमाज्ये प्रथमान्त्यसंयोगात् ॥ ५६ ॥ अपि वाज्यप्रधानत्वाद्गुणार्थे व्यपदेशे भक्त्या संस्कार शब्दः स्यात् ॥ ५७ ॥ अपि वाख्याविकारत्वात् तेन स्यादुपलक्षणम् ॥ ५८ ॥ न वा स्यात् गुणशास्त्रत्वात् ॥ ५९ ॥

दशमस्य अध्यायस्य पंचमः पादः

———:*:———

आनुपूर्व्यवतामेकदेश ग्रहणेष्वागमवदन्त्यलोपः स्यात् ॥ १ ॥ लिंगदर्शनाच्च ॥ २ ॥ विकल्पो वा समत्वात् ॥ ३ ॥ क्रमादुपजनोऽन्ते स्यात् ॥ ४ ॥ लिंगमविशिष्टं संख्याया हि तत् वचनम् ॥ ५ ॥ आदितो वा प्रवृत्तिः स्यादारम्भस्य तदादित्वात् वचनादन्त्यविधिः स्यात् ॥ ६ ॥ एकत्रिके तृचादिषु माध्यन्दिने छन्दसां श्रुतिभूतत्वात् ॥ ७ ॥ आदितो वा तन्न्यायत्वादितरस्यानुमानिकत्वात् ॥ ८ ॥ यथानिवेशश्च प्रकृतिवत् संख्यासाच्चविकारत्वात् ॥ ९ ॥ त्रिकस्तृते धुर्ये स्यात् ॥ १० ॥ एकस्यां वा स्तोमस्यावृत्तिधर्मत्वात् ॥ ११ ॥ चोदनासु त्वपूर्वत्वाल्लिङ्गं न धर्मनियमः स्यात् ॥ १२ ॥

प्राप्तिस्तु रात्रिशब्दसम्बन्धात् ॥ १३ ॥ अपूर्वासु तु सङ्ख्यासु विकल्पः स्यात् सर्वासामर्थवत्त्वात् ॥ १४ स्तोमविवृद्धौ प्राकृतानामभ्यासेन सङ्ख्यापूरणमविकारात् संख्यायां गुणशब्दत्वादन्यस्य चाश्रुतित्वात् ॥ १५ ॥ आगमेन वाऽभ्यासस्याश्रुतित्वात् ॥ १६ संख्यायाश्च पृथक्त्वनिवेशात् ॥ १७ ॥ पराक्शब्दत्वात् ॥ १८ ॥ उक्ताविकाराच्च ॥ १९ ॥ अश्रुतित्वान्नेति चेत् ॥ २० ॥ स्यादर्थचोदितानां परिमाणशास्त्रम् ॥ २१ ॥ आवापवचनं चाभ्यासे नोपपद्यते ॥ २२ ॥ साम्नां चोत्पत्तिसामर्थ्यात् ॥ २३ धूर्य्येष्वपीति चेत् ॥ २४ ॥ नावृत्तिधर्म्मत्वात् ॥ २५ ॥ वहिष्पवमाने तु ऋगागमः सामैकत्वात् ॥ २६ ॥ अभ्यासेन तु संख्यापूरणं सामिधेनीष्वभ्यासप्रकृतित्वात् ॥ २७ ॥ अविशेषात् नेति चेत् ॥ २८ ॥ स्यात् तद्धर्मत्वात् प्रकृतिवदभ्यस्येत आ सङ्ख्यापूरणात् ॥ २९ ॥ यावदुक्तं वा कृतपरिमाणत्वात् ॥ ३० ॥ अधिकानांच दर्शनात् ॥ ३१ ॥ कार्मस्वपीति चेत् ॥ ३२ ॥ न चोदितत्वात् ॥ ३३ ॥ षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् ॥ ३४ ॥ प्रकृतौ चाभावदर्शनात् ॥ ३५ ॥ अयज्ञ-

वचनाच्च ॥ ३६ ॥ प्रकृतौ वा शिष्टत्वात् ॥ ३७ ॥ प्रकृतिदर्शनाच्च ॥ ३८ ॥ आम्नातं परिसङ्ख्यार्थम् ॥ ३९ ॥ उक्तमभावदर्शनम् ॥ ४० ॥ गुणादयज्ञत्वम् ॥ ४१ ॥ तस्याग्रयणाद् गृहणम् ॥ ४२ ॥ उक्थ्याच्च वचनात् ॥ ४३ ॥ तृतीयसवने वचनात् स्यात् ॥ ४४ ॥ अनभ्यासे पराक्शब्दस्य तादर्थ्यात् ॥ ४५ ॥ उक्थ्यविच्छेदवचनत्वात् ॥ ४६ ॥ आग्रयणाद्वा पराक्शब्दस्य देशवाचित्वात् पुनराधेयवत् ॥ ४७ ॥ विच्छेदः स्तोमसामान्यात् ॥ ४८ ॥ उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात् सति हि संस्थान्यत्वम् ॥ ४९ ॥ सस्तुतशस्त्रो वा तदंगत्वात् ॥ ५० ॥ लिंगदर्शनाच्च ॥ ५१ ॥ वचनात् संस्थान्यत्वम् ॥ ५२ ॥ अभावादतिरात्रेषु गृह्यते ॥ ५३ ॥ अन्वयो वानारभ्यविधानात् ॥ ५४ ॥ चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयेत भोजनवत् ॥ ५५ ॥ अपि वा संख्यावत्त्वात् नानाहीनेषु गृह्यते पत्ववदेकस्मिन् संख्यार्थभावात् ॥ ५६ ॥ भोजने तत्संख्यं स्यात् ॥ ५७ ॥ जगत्सामि सामाभावात् ऋक्तः साम तदाख्यं स्यात् ॥ ५८ ॥ उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात् स्यात्

॥ ५९ ॥ सुखेऽन वा नियम्येत ॥ ६० ॥ निमित्त
विघाताद् वा क्रतुयुक्तस्य कर्म स्यात् ॥ ६१ ॥
ऐन्द्रवायवस्याग्रवचनादावृत्तिः प्रतिकर्षः स्यात्
॥ ६२ ॥ अपि वा धर्मविशेषात् तद्धर्माणां स्वस्था-
ने प्रकरणादग्रत्वमुच्यते ॥ ६३ ॥ धारासंयोगाच्च
॥ ६४ ॥ कामसंयोगे तु वचनादावृत्तिः प्रतिकर्षः
स्यात् ॥ ६५ ॥ तद्देशानां वाग्रसंयोगात् तद्युक्तं
कामशास्त्रं स्यात् नित्यसंयोगात् ॥ ६६ ॥ परेषु
चाग्रशब्दः पूर्ववत् स्यात् तदादिषु ॥ ६७ ॥ प्रति-
कर्षो वा नित्यार्थेनाग्रस्य तदसंयोगात् ॥ ६८ ॥
प्रतिकर्षञ्च दर्शयति ॥ ६९ ॥ पुरस्तादैन्द्रवायवस्या
ग्रस्य कृतदेशत्वात् ॥ ७० ॥ तुल्यधर्मत्वाच्च ॥ ७१
तथा च लिंगदर्शनम् ॥ ७२ ॥ सादनं चापि शेष-
त्वात् ॥ ७३ ॥ लिंगदर्शनाच्च ॥ ७४ ॥ प्रदान-
ञ्चापि सादनवद् ॥ ७५ ॥ न वा प्रधानत्वात्
शेषत्वात् सादनं तथा ॥ ७६ ॥ त्वग्नीकायां न्या-
योक्तेष्वाम्नानं गुणार्थं स्यात् ॥ ७७ ॥ अपि वाहर्ग-
णेष्वग्निवत् समानविधानं स्यात् ॥ ७८ ॥ द्वादशा-
हस्य व्यूढसमूढत्वं पृष्ठवत् समानविधानं स्यात्
॥ ७९ ॥ व्यूढो वा लिंगदर्शनात् समूढविकारः ॥ ८०

कामसंयोगात् ॥ ८१ ॥ तस्योभयथा प्रवृत्तिरैक-कर्म्यात् ॥ ८२ ॥ एकादशिनवत् त्वानीका परिवृत्तिः स्यात् ॥ ८३ ॥ स्वस्थानविवृद्धिर्वा अकामप्रत्यक्षसंख्यत्वात् ॥ ८४ ॥ पृष्ठावृत्तौ चाग्रयणस्य दर्शनात् त्रयस्त्रिंशे परिवृत्तौ पुनरैन्द्रवायवः स्यात् ॥ ८५ ॥ वचनात् परिवृत्तिरैकादशिनेषु ॥ ८६ ॥ लिंगदर्शनाच्च ॥ ८७ ॥ छन्दोव्यतिक्रमात् व्यूढे भक्ष-पवमान-परिधिकपालस्य मंत्राणां यथोत्पत्ति-वचनमूहवत् स्यात् ॥ ८८ ॥

दशमस्य अध्यायस्य षष्ठः पादः

—:※:—

एकत्रस्थानि यज्ञे स्युः स्वाध्यायवत् ॥ १ ॥ तृचे वा लिंगदर्शनात् ॥ २ ॥ सदृशं प्रति वीक्षणं कालमात्रं परार्थत्वात् ॥ ३ ॥ पृष्ठास्य युगपद्विधेरेकाहवत् द्विसामत्वम् ॥ ४ ॥ विभक्ते वा समस्त-विधानात् तद्विभागे विप्रतिषिद्धम् ॥ ५ ॥ समासस्त्वैकादशिनेषु तत्प्रकृतित्वात् ॥ ६ ॥ विहार-प्रतिषेधाच्च ॥ ७ ॥ श्रुतितो वा लोकवद्विभागः स्यात् ॥ ८ ॥ विहार प्रकृतित्वाच्च ॥ ९ ॥ विशये च

तद्दासत्ते ॥ १० ॥ त्रयस्तथेति चेत् ॥ ११ ॥ न समत्वात् प्रयाजवत् ॥ १२ ॥ सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वात् ॥ १३ ॥ विधेस्तु विप्रकर्षः स्यात् ॥ १४ ॥ वैरूपसामा क्रतुसंयोगात् त्रिवृद्वदेकसामा स्यात् ॥ १५ ॥ पृष्ठार्थे वा प्रकृतिलिंगसंयोगात् ॥ १६ ॥ त्रिवृद्वदिति चेत् ॥ १७ ॥ न प्रकृतावकृतत्वसंयोगात् ॥ १८ ॥ विधित्वान्नेति चेत् ॥ १९ ॥ स्यात् विशये तन्न्यायत्वात् कर्माविभागात् ॥ २० ॥ प्रकृतेश्चाविकारात् ॥ २१ त्रिवृति संख्यात्वेन सर्वसंख्या विकारः स्यात् ॥ २२ स्तोमस्य वा तल्लिंगत्वात् ॥ २३ ॥ उभयसाम्नि विश्वजिद्वद्विभागः स्यात् ॥ २४ ॥ पृष्ठार्थे वा तदर्थत्वात् ॥ २५ ॥ लिंगदर्शनाच्च ॥ २६ ॥ पृष्ठे रसभोजनमावृत्ते संस्थिते त्रयस्त्रिंशेऽहनि स्यात् तदानन्तर्य्यात् प्रकृतिवत् ॥ २७ ॥ अन्ते वा कृतकालत्वात् ॥ २८ ॥ अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात् ॥ २९ ॥ अन्ते वा कृतकालत्वात् ॥ ३० ॥ आवृत्तिस्तु व्यवाये कालभेदात् स्यात् ॥ ३१ ॥ मधु न दीक्षिता ब्रह्मचारित्वात् ॥ ३२ ॥ प्राश्येत वा यज्ञार्थत्वात् ॥ ३३ ॥ मानः

समहरन्तरं स्यात् भेदव्यपदेशात् ॥ ३४ ॥ तेन च संस्तवात् ॥ ३५ ॥ अन्तरन्ताञ्च परेण चोदना ॥ ३६ पक्षे संख्या सहस्रवत् ॥ ३७ ॥ अहरङ्गं वाऽ'शुवच्चोदनाभावात् ॥ ३८ ॥ दशमविसर्गवचनाच्च ॥ ३९ ॥ दशमेऽहन्निति च तद्गुणशास्त्रात् ॥ ४० ॥ संख्यासामंजस्यात् ॥ ४१ ॥ पशुातिरेके चैकस्य भावात् ॥ ४२ ॥ स्तुतिव्यपदेशमंगेन विप्रतिषिद्धं व्रतवत् ॥ ४३ ॥ वचनादतदन्तत्वम् ॥ ४४ ॥ सत्रमेकः प्रकृतिवत् ॥ ४५ ॥ वचनात् तु बहूनां स्यात् ॥ ४६ ॥ अपदेशः स्यादिति चेत् ॥ ४७ ॥ नैकव्यपदेशात् ॥ ४८ ॥ सन्निवापञ्च दर्शयति ॥ ४९ ॥ बहूनामिति चैकस्मिन् विशेषवचनं व्यर्थम् ॥ ५० ॥ अन्ये स्युऋ'त्विजः प्रकृतिवत् ॥ ५१ ॥ अपि वा यजमानाः स्युऋ'त्विजामभिधानसंयोगात् तेषां स्यात् यजमानत्वम् ॥ ५२ ॥ कर्तृसंस्कारो वचनादाधातृवदिति चेत् ॥ ५३ ॥ स्यान्निश्चये तन्न्यायत्वात् प्रकृतिवत् ॥ ५४ ॥ स्वाम्याख्याः स्युर्गृहपतिवदिति चेत् ॥ ५५ ॥ न प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्मेण ॥ ५६ ॥ दीक्षितादीक्षितव्यपदेशश्च नोपपद्यते ऽर्थयोर्नित्यभावित्वात् ॥ ५७ ॥ अदक्षिणत्वाच्च

॥ ५८ ॥ द्वादशाहस्य सत्त्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्त्रशब्दाभिसंयोगात् ॥ ५९ ॥ यजतिचोदनादहीनत्वं स्वामिनां चाऽस्थितपरिमाणत्वात् ॥ ६० ॥ अहीने दक्षिणाशास्त्रं गुणत्वात् प्रत्यहं कर्म भेदः स्यात् ॥ ६१ ॥ सर्वस्य वैककर्म्यात् ॥ ६२ ॥ पृषदाज्यवद्वाऽह्नां गुणशास्त्रं स्यात् ॥ ६३ ज्योतिष्टोम्यस्तु दक्षिणाः सर्वासामेककर्मत्वात् प्रकृतिवत् तस्मान्नासां विकारः स्यात् ॥ ६४ ॥ द्वादशाहे वचनात् प्रत्यहं दक्षिणाभेदस्तत्प्रकृतित्वात् परेषु तासां संख्याविकारः स्यात् ॥ ६५ ॥ परिक्रयाविभागाद्वा समस्तस्य विकारः स्यात् ॥ ६६ ॥ भेदस्तु गुणसंयोगात् ॥ ६७ ॥ प्रत्यहं सर्वसंस्कारः प्रकृतिवत्सर्वासां सर्वशेषत्वात् ॥ ६८ ॥ एकार्थत्वान्नेति चेत् ॥ ६९ ॥ स्यादुत्पत्तौ कालभेदात् ॥ ७० ॥ विभज्य तु संस्कारवचनात् द्वादशाहवत् ॥ ७१ ॥ लिंगेन द्रव्यनिर्देशे सर्वत्र प्रत्ययः स्यात् लिंगस्य सर्वगामित्वादाग्नेयवत् ॥ ७२ ॥ यावदर्थं वा अर्थशेषत्वादल्पेन परिमाणं स्यात् तस्मिंश्च लिंगसामर्थ्यम् ॥ ७३ ॥ आग्नेये कृत्स्नविधिः ॥ ७४ ऋजीषस्य प्रधानत्वादहर्गणे सर्वस्य प्रतिपत्तिः स्यात्

॥ ७५ ॥ वाससि मानोपावहरणे प्रकृतौ सोमस्य वचनात् ॥ ७६ तच्चाहर्गणेऽर्थाद्वासः प्रकृतिः स्यात् ॥ ७७ ॥ मानं प्रत्युत्पादयेत् प्रकृतौ तेन दर्शनादुपावहरणस्य ॥ ७८ ॥ हरणे वा श्रुत्यसंयोगादर्थाद्विकृतौ तेन ॥ ७९ ॥

दशमस्य अध्यायस्य सप्तमः पादः

——:*:——

पशोरेकहविष्ट्वं समस्तचोदितत्वात् ॥ १ ॥ प्रत्यंगं वा ग्रहवदंगानां पृथक्प्रकल्पनत्वात् ॥ २ ॥ हविर्भेदात् कर्मणोऽभ्यासः तस्मात्तेभ्योऽवदानं स्यात् ॥ ३ ॥ आज्यभागवद्वा निर्देशात् परिसंख्या स्यात् ॥ ४ ॥ तेषां वा द्व्यवदानत्वं विवक्षन्नभिनिर्दिशेत् पशोः पंचावदानत्वात् ॥ ५ ॥ अंसशिरोनूकसक्थिप्रतिषेधश्च तदन्यपरिसङ्ख्यानेऽनर्थकः स्यात् प्रदानत्वात् तेषां निरवदान प्रतिषेधः स्यात ॥ ६ ॥ अपि वा परिसङ्ख्या स्यादनवदानीयशब्दत्वात् ॥ ७ ॥ अब्राह्मणे च दर्शनात् ॥ ८ ॥ शृताशृतोपदेशाच्च तेषामुत्सर्गवदयज्ञशेषत्वम् ॥ ९ ॥ इज्याशेषात् स्विष्टकृदिज्येत प्रकृतिवत् ॥ १० ॥ त्र्यङ्गै-

वां शरवत् विकारः स्यात् ॥ ११ ॥ अध्यूध्नी तु होतुः चाग्ंगवत् इडाभक्षविकारः स्यात् ॥ १२ ॥ शेषे वा समवैति तस्माद्रथवन्नियमः स्यात् ॥ १३ ॥ अशास्त्रत्वात्तु नैवं स्यात् ॥ १४ ॥ अपि वा दानमात्रं स्यात् भक्षशव्दानभिसम्बन्धात् ॥ १५ ॥ दातुस्त्वविद्यमानत्वादिडाभक्षविकारः स्यात् शेषं प्रत्यविशिष्टत्वात् ॥ १६ ॥ अग्नीधश्च वनिष्ठुरध्यूध्नीवत् ॥ १७ ॥ अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम् ॥ १८ ॥ स्याद्वा होत्रध्वर्युविकारत्वात्तयोः कर्माभिसम्बन्धात् ॥ १९ ॥ द्विभागः स्यात् द्विकर्मत्वात् ॥ २० ॥ एकत्वाद्वैकभागः स्यात् भागस्याश्रुतिभूतत्वात् ॥ २१ ॥ प्रतिप्रस्थातुश्च वपाश्रपणात् ॥ २२ ॥ अभक्षो वा कर्मभेदात्तस्याः सर्वप्रदानत्वात् ॥ २३ ॥ विकृतौ प्राकृतस्य विधेर्ग्रहणात् पुनः श्रुतिरनर्थिका स्यात् ॥ २४ ॥ अपिवाग्नेयवत् द्विशव्दत्वं स्यात् ॥ २५ ॥ न वा शव्दपृथक्त्वात् ॥ २६ ॥ अधिकं वार्थवत्त्वात् स्यादर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् ॥ २७ ॥ प्रतिषेधः स्यादिति चेत् ॥ २८ ॥ नाश्रुतत्वात् ॥ २९ ॥ अग्रहणादिति चेत् ॥ ३० ॥ न

तुल्यत्वात् ॥ ३१ ॥ तथा तद्ग्रहणे स्यात् ॥ ३२ ॥ अपूर्वतान्तु दर्शयेत् ग्रहणस्यार्थवत्त्वात् ॥ ३३ ॥ ततोऽपि यावदुक्तं स्यात् ॥ ३४ ॥ स्विष्टकृद्भक्षप्रतिषेधः स्यात् तुल्यकारणत्वात् ॥ ३५ ॥ अप्रतिषेधो वा दर्शनादिडायां स्यात् ॥ ३६ ॥ प्रतिषेधो वा विधिपूर्वस्य दर्शनात् ॥ ३७ ॥ शंय्विडान्तत्वे विकल्पः स्यात् परेषु पत्न्यनुयाजप्रतिषेधोऽनर्थकः स्यात् ॥ ३८ नित्यानुवादो वा कर्मणः स्यादशब्दत्वात् ॥ ३९ ॥ प्रतिषेधार्थवत्त्वात् चोत्तरस्य परस्तात् प्रतिषेधः स्यात् ॥ ४० ॥ प्राप्तेर्वा पूर्वस्य वचनादतिक्रमः स्यात् ॥ ४१ ॥ प्रतिषेधस्य त्वरायुक्तत्वात् तस्य च नान्यदेशत्वम् ॥ ४२ ॥ उपसत्सु यावदुक्तमकर्म स्यात् ॥ ४३ ॥ सौविष्ट वा गुणत्वात् शेषप्रतिषेधः स्यात् ॥ ४४ ॥ अप्रतिषिद्धं वा प्रतिषिध्यप्रतिसवात् ॥ ४५ ॥ अनिज्या वा शेषस्य मुख्यदेवतानभीज्यत्वात् ॥ ४६ ॥ अवभृथे बर्हिषः प्रतिषेधात् शेषकर्म स्यात् ॥ ४७ ॥ आज्यभागयोर्वा गुणत्वात् शेषप्रतिषेधः स्यात् ॥ ४८ ॥ प्रयाजानां त्वेकदेशप्रतिषेधात् वाक्यशेषत्वं तस्मान्नित्यानुवादः स्यात् ॥ ४९ ॥ आज्यभागयोर्ग्रहणं नित्यानुवादो गृहमे

ध्रीग्रवत् स्यात् ॥ ५० ॥ विरोधिनामेकश्रुतौ नियमः स्यात् ग्रहणस्यार्थवत्त्वात् शरवच्च श्रुतितो विशिष्टत्वात् ॥ ५१ ॥ उभयप्रदेशान्नेति चेत् ॥ ५२ ॥ शरेष्वपीति चेत् ॥ ५३ ॥ विरोध्य-ग्रहणात्तथा, शरेष्विति चेत् ॥ ५४ ॥ तथेतरस्मिन् ॥ ५५ ॥ श्रुत्यानर्थक्यमिति चेत् ॥ ५६ ॥ ग्रहण स्यार्थवत्त्वादुभयोरप्रतिपत्तिः स्यात् ॥ ५७ ॥ सर्वासाञ्च गुणानामर्थवत्त्वात् ग्रहणमप्रवृत्ते स्यात् ॥ ५८ ॥ अधिकं स्यादिति चेत् ॥ ५९ ॥ नार्थाभावात् ॥ ६० ॥ तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः प्रवृत्तौ हि विकल्पः स्यात् ॥ ६१ ॥ यावच्छ्रुतीति चेत् ॥ ६२ ॥ न प्रकृतावशब्दत्वात् ॥ ६३ ॥ विकृतौ त्वनियमः स्यात् पृषदाज्यवत् ग्रहणस्य गुणार्थत्वात् उभयोश्च प्रदिष्टत्वात् गुणशास्त्रं यदेति स्यात् ॥ ६४ ॥ एकार्थ्याद्वा नियम्येत श्रुतितो विशिष्टत्वात् ॥ ६५ ॥ विरोधित्वाच्च लोकवत् ॥ ६६ ॥ कृतोऽश्च तद्गुणत्वात् ॥ ६७ ॥ विरोधिनाञ्च तत् श्रुतावशब्दत्वात् विकल्पः स्यात् ॥ ६८ ॥ पृषदाज्ये समुच्चयात् ग्रहणस्य गुणार्थत्वम् ॥ ६९ ॥ यद्यपि

चतुरवत्तीति तु नियमे नोपपद्यते ॥ ७० ॥ क्रत्वन्तरे वा तन्न्यायत्वात् कर्मभेदात् ॥ ७१ ॥ यथाश्रुतीति चेत् ॥ ७२ ॥ न चोदनैकत्वात् ॥ ७३ ॥

दशमस्य अध्यायस्य अष्टमः पादः

---

प्रतिषेधः प्रदेशेऽनारभ्य-विधाने च प्राप्तप्रतिषिद्धत्वात् विकल्पः स्यात् ॥ १ ॥ अर्थप्राप्तवदिति चेत् ॥ २ ॥ न, तुल्यहेतुत्वादुभयं शब्दलक्षणम् ॥ ३ ॥ अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशःस्यात् ॥ ४ ॥ अपूर्वे चार्थवादः स्यात् ॥ ५ ॥ शिष्ट्वा तु प्रतिषेधःस्यात् ॥ ६ ॥ न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यादानर्थक्यात् परसामर्थ्याच्च ॥ ७ ॥ पूर्वैश्च तुल्यकालत्वात् ॥ ८ ॥ उपवादश्च तद्वत् ॥ ९ ॥ प्रतिषेधादकर्मेति चेत् ॥ १० न शब्दपूर्वत्वात् ॥ ११ ॥ दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात् सर्वदानहोमपाकप्रतिषेधः स्यात् ॥ १२ ॥ अक्रतुयुक्तानां वा धर्मः स्यात् क्रतोः प्रत्यक्ष शिष्टत्वात् ॥ १३ ॥ तस्य वाप्यानुमानिकमविशेषात ॥ १४ ॥ अपि तु वाक्यशेषत्वादितर

पर्य्युदासः स्यात् प्रतिषेधे विकल्पः स्यात् ॥१५
अविशेषेण यत् शास्त्रमन्याय्यत्वात् विकल्पस्य तत्
सन्दिग्धमारादिशेषशिष्टं स्यात् ॥ १६ ॥ अप्रकरणे
तु यच्छास्त्रं विशेषे अयभाणमविकृतमाजाभागवत्
प्राकृतप्रतिषेधार्थम् ॥ १७ ॥ विकारे तु तदर्थं
स्यात् ॥ १८ ॥ वाक्यशेषो वा क्रतुना ग्रहणात्
स्यादनारभ्यविधानस्य ॥ १९ ॥ मन्त्रेष्ववाक्यशेषत्वं
गुणोपदेशात्स्यात् ॥ २० ॥ अनाम्नाते च दर्शनात्
॥ २१ ॥ प्रतिषेधाच्च ॥ २२ ॥ अन्यतिथ्याद्यस्य
विकृतावुपदेशादप्रवृत्तिः स्यात् ॥ २३ ॥ मासि-
ग्रहणाच्च तद्वत् ॥ २४ ॥ गृहणं वा तुल्यत्वात्
॥ २५ ॥ लिङ्गदर्शनाच्च ॥ २६ ॥ गृहणं समानवि-
धानं स्यात् ॥ २७ ॥ मासि-गृहणमभ्यासप्रतिषेधा-
र्थम् ॥ २८ ॥ उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य
होमसंयोगात् अधिकमाज्यमतुल्यत्वाल्लोकवदुत्प-
त्तेर्गुणभूतत्वात् ॥ २९ ॥ तत्संस्कारश्रुतेश्च ॥ ३०
ताभ्यां वा सह स्विष्टकृतः सकृत्त्वे द्विरभिघारणेन
तदाप्तिवचनात् ॥ ३१ ॥ तुल्यवच्चाभिधाय सर्वेषु
भक्त्यानुक्रमणात् ॥ ३२ ॥ साम्नदध्यवन्नियम्येत
॥ ३३ ॥ हविषो वा गुणभूतत्वात्तथाभूतविवक्षा

स्यात् ॥ ३४ ॥ पुरोडाशाभ्यामित्यधिकृतानां पुरो-डाशयोरुपदेशस्तत्श्रुतित्वाद्वैश्यस्तोमवत् ॥ ३५ ॥ नत्वनित्याधिकारोऽस्ति विधौ नित्येन सम्बन्धस्त-स्मादवाक्यशेषत्वम् ॥ ३६ ॥ सति च नैकदेशेन कर्त्तुः प्रधानभूतत्वात् ॥ ३७ ॥ कृतत्वात्तु, तथा स्तोमे ॥ ३८ ॥ कर्त्तुः स्यादिति चेत् ॥ ३९ ॥ न गुणार्थत्वात् प्राप्ते च नोपदेशार्थः ॥ ४० ॥ कर्म-णोस्तु प्रकरणे तन्न्यायत्वात् गुणानां लिङ्गेन काल-शास्त्रं स्यात् ॥ ४१ ॥ यदि तु सान्नाय्यं सोमया-जिनो न ताभ्यां समवायोऽस्ति विभक्तकालत्वात् ॥ ४२ ॥ अपि वा विहितत्वात् गुणार्थायां पुनः श्रुतौ सन्देहे श्रुतिर्हि देवतार्था स्यात् यथानभिप्रे-तः तथाग्नेयो दर्शनादेकदेवते ॥ ४३ ॥ विधिं तु वा-दरायण ॥ ४४ ॥ प्रतिषिद्धविज्ञानाद्वा ॥ ४५ ॥ तथा चान्यार्थदर्शनम् ॥ ४६ ॥ उपांशुयाजमन्तरा यजतीति हविर्लिंगाश्रुतित्वात् यथाकामी प्रती-येत् ॥ ४७ ॥ ध्रौवाद्वा सर्वसंयोगात् ॥ ४८ ॥ तद्वच्च देवतायां स्यात् ॥ ४९ ॥ तान्त्रीणां प्रकरणात् ॥ ५० ॥ धर्माद्वा स्यात् प्रजापतिः ॥ ५१ ॥ देव-तायास्त्वनिर्वचनं तत्रशब्दस्येह मृदुत्वं तस्मादि-

हाधिकारेण ॥ ५२ ॥ विष्णुर्वा स्याद्धौत्राम्नाना-
दमावास्यायामपि स्यात् हौत्रस्य तत्र दर्शनात् ॥ ५३
अपि वा पौर्णमास्यां स्यात् प्रधानशब्दसंयोगात्
गुणत्वान्मन्त्रो यथाप्रधानं स्यात् ॥ ५४ ॥ आनन्त-
र्य्यञ्च सान्नाय्यस्य पुरोडाशेन दर्शयति अमावास्या-
विकारे ॥ ५५ ॥ अग्नीषोमविधानात्तु, पौर्णमास्या-
मुभयञ्च विधीयते ॥ ५६ ॥ प्रतिषिद्ध विधानात्
वा विष्णुः समानदेशः स्यात् ॥ ५७ ॥ तथा चा-
न्यार्थदर्शनम् ॥ ५८ ॥ न चानङ्गं सकृच्छ्रुतावुभयञ्च
विधीयेतासम्बन्धात् ॥ ५९ ॥ गुणानां च परार्थ-
त्वात्, प्रकृतौविधिलिङ्गानि दर्शयति ॥ ६० ॥
विकारे चाश्रुतित्वात् ॥ ६१ ॥ द्विपुरोडाशायां
स्यादन्तरार्थत्वात् ॥ ६२ ॥ अजामिकरणार्थत्वाच्च
॥ ६३ ॥ तदर्थमिति चेन्न तत्प्रधानत्वात् ॥ ६४ ॥
अशिष्टेन च सम्बन्धात् ॥ ६५ ॥ उत्पत्तेस्तु निवेशः
स्याद्गुणस्यानुपरोधेनार्थस्य विद्यमानत्वात् विधा-
नादन्तरार्थस्य नैमित्तिकत्वात् तदभावेऽश्रुतौ
स्यात् ॥ ६६ ॥ उभयोस्तु विधानात् ॥ ६७ ॥
गुणानाञ्च परार्थत्वादुपवेषवद्यदेति स्यात् ॥ ६८ ॥

अनपायश्च कालस्य लक्षणं हि पुरोडाशौ ॥ ६९ ॥
प्रशंसार्थमजामित्वम् ॥ ७० ॥

एकादशाध्यायस्य प्रथमः पादः

—:※:—

प्रयोजनाभिसम्बन्धात् पृथक्सतां ततः स्यादैक कर्म्यमेकशब्दाभिसंयोगात् ॥ १ ॥ शेषवद्वा प्रयोजनं प्रतिकर्म विभज्येत ॥ २ ॥ अविधानात्तु नैवं स्यात् ॥ ३ ॥ शेषस्य हि परार्थत्वाद्विधानात् प्रतिप्रधानभावः स्यात् ॥ ४ ॥ अङ्गानान्तु शब्दभेदात् क्रतुवत् स्यात् फलान्यत्वम् ॥ ५ ॥ अर्थभेदस्तु तत्रार्थेह्यैकार्थ्यादैककर्म्यम् ॥ ६ ॥ शब्दभेदान्नेति चेत् ॥ ७ ॥ कर्मार्थत्वात् प्रयोगे ताच्छब्द्यं स्यात् तदर्थत्वात् ॥ ८ ॥ कर्तृविधेर्नानार्थत्वाद्गुणप्रधानेषु ॥ ९ ॥ आरम्भस्य शब्दपूर्वत्वात् ॥ १० ॥ एकेनापि समाप्येत कृतार्थत्वाद्यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत् स्यात् ॥ ११ ॥ फलाभावान्नेति चेत् ॥ १२ ॥ न, कर्मसंयोगात् प्रयोजनमशब्ददोषं स्यात् ॥ १३ ॥ ऐकशब्द्यादिति चेत् ॥ १४ ॥ नार्थपृथक्त्वात्समत्वाद्गुणत्वम् ॥ १५ ॥

विधेस्त्वेकश्रुतित्वादपर्य्यायविधानात् नित्यवच्छ्रुतभूताभिसंयोगात् अर्थेन युगपत् प्राप्तेर्यथाप्राप्तं स्वशब्दो नित्योतवत् सर्वप्रयोगे प्रवृत्तिः स्यात् ॥ १६ तथा कर्मोपदेशत्वात् ॥ १७ ॥ क्रत्वन्तरेषु पुनर्वचनम् ॥ १८ ॥ उत्तरास्वश्रुतित्वाद्विशेषाणां कृतार्थत्वात् सन्दोहे यथा कामी प्रतीयेत ॥ १९ ॥ कर्मण्यारम्भभाव्यत्वात् कृषिवत् प्रत्यारम्भं फलानि स्युः ॥ २० ॥ अधिकारश्च सर्वेषां कार्य्यत्वादुपपद्यते विशेषः ॥ २१ ॥ सकृत्तु स्यात् कृतार्थत्वादङ्गवत् ॥ २२ ॥ शब्दार्थश्च तथा लोके ॥ २३ ॥ अपि वा संप्रयोगे यथाकामो प्रतीयेताश्रुतित्वाद्विधिषु वचनानि स्युः ॥ २४ ॥ एकशब्द्यात् तथाङ्गेषु ॥ २५ लोके कर्मार्थलक्षणम् ॥ २६ ॥ क्रियाणामर्थशेषत्वात् प्रत्यक्षतस्तन्निर्वृत्त्याऽपवर्गः स्यात् ॥ २७ ॥ धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात् ॥ २८ ॥ क्रतुवच्चानुमानेनाभ्यासे फलभूमा स्यात् ॥ २९ ॥ सकृद्वा कारणैकत्वात् ॥ ३२ ॥ परिमाणं चानियमेन स्यात् ॥ ३१ ॥ फलस्यारम्भनिर्वृत्तेः क्रतुषु स्यात् फलान्यत्वम् ॥ ३२ ॥ अर्थवतस्तु नैकत्वादभ्यासः स्यादनर्थको यथा भोजनमेकस्मिन्नर्थस्यापरि

माथत्वात् प्रधाने च क्रियार्थत्वादनियमः स्यात् ॥ ३३ ॥ पृथक्त्वाद्विधितः परिमाणं स्यात् ॥ ३४ ॥ अनभ्यासो वा प्रयोगवचनैकत्वात् सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणः स्यात् क्रियार्थत्वात् ॥ ३५ अभ्यासो वा छेदनसंमार्गावदानेषु वचनात्सकृत्त्वस्य ॥ ३६ ॥ अनभ्यासस्तु वाच्यत्वात् ॥ ३७ ॥ बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् ॥ ३८ ॥ दृष्टः प्रयोग इति चेत् ॥ ३९ ॥ भक्त्येति चेत् ॥ ४० ॥ तथेतरस्मिन् ॥ ४१ ॥ प्रथमं वा नियम्येत कारणादतिक्रमः स्यात् ॥ ४२ ॥ श्रुत्यर्थाविशेषात् ॥ ४३ ॥ तथा चान्यार्थदर्शनम् ॥ ४४ ॥ प्रकृत्या च पूर्ववत् तदासत्तेः ॥ ४५ ॥ उत्तरासु यावत् स्वमपूर्वत्वात् ॥ ४५ ॥ यावत्स्वं वान्यविधानेनानुवादः स्यात् ॥ ४७ ॥ साकल्यविधानात् ॥ ४८ वह्वर्थत्वाच्च ॥ ४९ ॥ अग्निहोत्रे चाशेषवद्यवागूनियमः प्रतिषेधः कुमाराणाम् ॥ ५० ॥ सर्वप्रायिणापि लिङ्गेन संयुज्यते देवताभिसंयोगात् ॥ ५१ ॥ प्रधानकर्मार्थत्वादङ्गानां तद्भेदात्कर्मभेदः प्रयोगे स्यात् ॥ ५२ ॥ क्रमकोपश्च यौगपद्यात् स्यात् ॥ ५३ ॥ तुल्यानां यौगपद्यमेकशब्दोपदेशात् स्याद्

विशेषाग्रहणात् ॥ ५३ ॥ ऐकार्थ्यादव्यवायः स्यात् ॥ ५४ ॥ तथा चान्यार्थदर्शनं कामुकायनः ॥ ५५ ॥ तन्न्यायत्वादशक्तेरानुपूर्व्यं स्यात्संस्कारस्य तदर्थत्वात् ॥ ५६ ॥ असंसृष्टोऽपि तादर्थ्यात् ॥ ५७ ॥ विभवा-द्वा प्रदीपवत् ॥ ५८ ॥ अर्थात् लोके विधितः प्रति प्रधानं स्यात् ॥ ५९ ॥ सकृदिज्यां कामुकायनः परिमाणविरोधात् ॥ ६० ॥ विधेस्त्वितरार्थत्वात् सकृदिज्या श्रुतिव्यतिक्रमः स्यात् ॥ ६१ ॥ विधिवत् प्रकरणाविभागे प्रयोगं बादरायणः ॥ ६२ ॥ अपि चैकेन सन्निधानमविशेषको हेतुः ॥ ६३ ॥ क्वचित् विधानान्नेति चेत् ॥ ६४ ॥ न विधेश्चोदितत्वात् ॥ ६५ ॥ व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाण विशेषाणाम् ॥ ६६ ॥ भेदस्तु कालभेदाच्चोदना-व्यवायात् स्याद्विशिष्टानां विधिः प्रधानकालत्वात् ॥ ६७ ॥ तथा चान्यार्थदर्शनम् ॥ ६८ ॥ विधिरिति चेत् न वर्त्तमानापदेशात् ॥ ६९ ॥

---

## एकादशाध्यायस्य द्वितीयः पादः

—:*:—

एकदेशकालकर्त्तृत्वं मुख्यानामेकशब्दोपदेशात ॥ १ ॥ अविधिश्चेत् कर्मणामभिसम्बन्धः प्रतीयेत् तल्लक्षणार्थाभिसंयोगाद्विधित्वाच्चेतरेषां प्रति प्रधानभावः स्यात् ॥ २ ॥ अङ्गेषु च तदभावः प्रधानं प्रति निर्देशात् ॥ ३ ॥ यदि तु कर्मणो विधिसम्बन्धः स्यादैकशब्द्यात् प्रधानार्थाभिधासंयोगात् ॥ ४ ॥ तथा चान्यार्थदर्शनम् ॥ ५ ॥ श्रुतिश्चैषां प्रधानवत् कर्मश्रुतेः परार्थत्वात् ॥ ६ ॥ कर्मणोऽश्रुतत्वाच्च ॥ ७ ॥ अङ्गानि तु विधानत्वात प्रधानेनोपदिश्येरन् तस्मात् स्यादेकदेशत्वम् ॥ ८ ॥ द्रव्यदेवतं तथेति चेत् ॥ ९ ॥ न चोदनाविधिशेषत्वात् नियमार्थो विशेषः ॥ १० ॥ तेषु समवेतानां समवायात्तन्त्रमङ्गानि भेदस्तु तद्भेदात् कर्मभेदप्रयोगे स्यात् तेषां प्रधानशब्दत्वात्तथा चान्यार्थदर्शनम् ॥ ११ ॥ इष्टि राजसूयचातुर्मास्येष्वैककर्म्या-

दङ्गानां तन्त्रभावः स्यात् ॥ १२ ॥ कालभेदान्नेति चेत् ॥ १३ ॥ नैकदेशत्वात् पशुवत् ॥ १४ ॥ अपि वा कर्म पृथक्त्वात्तेषां तन्त्रविधानात् साङ्गानामुपदेशः स्यात् ॥ १५ ॥ तथा चान्यार्थदर्शनम् ॥ १६ ॥ तथा तदवयवेषु स्यात् ॥ १७ ॥ पशौ तु चोदनैकत्वात्तन्त्रस्य विप्रकर्षः स्यात् ॥ १८ ॥ तथा स्यादध्वरकल्पेष्टौ विशेषस्यैककालत्वात् ॥ १९ ॥ इष्टिरिति चैकवच्छ्रुतिः ॥ २० ॥ अपि वा वा कर्मपृथक्त्वात्तेषां च तन्त्रविधानात् साङ्गानामुपदेशः स्यात् ॥ २१ ॥ प्रथमस्य वा कालवचनम् ॥ २२ ॥ फलैकत्वादिष्टिशब्दो यथान्यत्र ॥ २३ ॥ वसाहोमस्तन्त्रम् एकदेवतेषु स्यात् प्रदानस्यैककालत्वात् ॥ २४ ॥ कालभेदात्त्वावृत्तिर्देवताभेदे ॥ २५ ॥ अन्ते यूपाहुतिस्तद्वत् ॥ २६ ॥ इतरप्रतिषेधो वा ॥ २७ ॥ अशास्त्रवत्त्वाच्च देशानाम् ॥ २८ ॥ अवभृथे प्रधानेऽग्निविकारः स्यान्न हि तद्धेतुरग्निसंयोगः ॥ २९ ॥ साङ्गो वा प्रयोगवचनैकत्वात् ॥ ३० ॥ लिङ्गदर्शनाच्च ॥ ३१ ॥ शब्दविभागाच्च देवता भयः ॥ ३२ ॥ दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात् सर्वं क्रियते

॥ ३३ ॥ अचोदनेति चेत् ॥ ३४ ॥ स्यात् पौर्णमासीवत् ॥ ३५ ॥ प्रयोगचोदनेति चेत् ॥ ३६ ॥ इहापि सारुत्याः प्रयोगश्चोद्यते ॥ ३७ ॥ आसादनमिति चेत् ॥ ३८ ॥ नोत्तरेणैकवाक्यत्वात् ॥ ३९ ॥ अवाच्यत्वात् ॥ ४० ॥ आम्नायवचनं तद्वत् ॥ ४१ कर्तृभेदस्तथेति चेत् ॥ ४२ ॥ न समवायात् ॥ ४३ ॥ लिङ्गदर्शनाच्च ॥ ४४ ॥ वेदिसंयोगादिति चेत् ॥ ४५ ॥ न देशमात्रत्वात् ॥ ४६ ॥ एकवाक्यत्वात् ॥ ४७ ॥ एकाग्नित्वादपरेषु तन्त्रं स्यात् ॥ ४८ ॥ नाना वा कर्तृभेदात् ॥ ४९ ॥ पर्य्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रुतिसामान्यादारण्यवत्तस्माद्ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् ॥ ५० ॥ संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् ॥ ५१ ॥ वाक्यैकत्वे क्रतुसामान्यात् ॥ ५२ ॥ वपानां चानभिघारणस्य दर्शनात् ॥ ५३ ॥ पञ्चशारदीयास्तथेति चेत् ॥ ५४ ॥ न चोदनैकवाक्यत्वात् ॥ ५५ ॥ यातयामत्वाच्च ॥ ५६ ॥ संस्काराणां च तद्दर्शनात् ॥ ५७ ॥ दशपेये क्रय प्रतिकर्षात् प्रतिकर्षः ततः प्राचान्तत्समानं तन्त्रं स्यात् ॥ ५८ ॥ समानवचनं तद्वत् ॥ ५९ ॥ अप्रति-

कर्षो वाऽर्थहेतुत्वात् ॥ ६० ॥ पूर्वस्मिंश्चावभृथस्य दर्शनात् ॥ ६१ ॥ समानः कालसामान्यात् ॥ ६२ निष्कासस्याऽवभृथे तदेकदेशत्वात् पशुवत् प्रदान-विप्रकर्षः स्यात् ॥ ६३ ॥ अपनयो वा प्रसिद्धेना-भिसंयोगात् ॥ ६४ ॥ प्रतिपत्तिरिति चेन्न कर्म-संयोगात् ॥ ६५ ॥ उदयनीये च तद्वत् ॥ ६६ ॥ प्रतिपत्तिर्वाऽकर्मसंयोगात् ॥ ६७ ॥ अर्थकर्म वा शेषत्वाच्छ्रयणवत्तदर्थेन विधानात् ॥ ६८ ॥

## एकादशाध्यायस्य तृतीयः पादः

———:※:———

अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम् ॥ १ द्रव्यस्य कर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात् स्वकालत्वात् ॥ २ ॥ यूपस्याकर्मकालत्वात् ॥ ३ ॥ एकयूपं च दर्शयति ॥ ४ ॥ संस्कारास्त्वावर्तेरन्नर्थ-कालत्वात् ॥ ५ ॥ तत्कालस्तु यूपकर्मत्वात्तस्य धर्म विधानात् सर्वार्थानां च वचनादन्यकालत्वम् ॥ ६ सकृन्मानं च दर्शयति ॥ ७ ॥ स्वरुस्त्वापवर्गः स्यादस्वकालत्वात् ॥ ८ ॥ साधारणे वानुनिष्पत्ति-

स्तस्य साधारणत्वात् ॥ ९ ॥ सोमान्ते च प्रतिपत्ति दर्शनात् ॥ १० ॥ न चोत्पत्तिवाक्यत्वात् प्रदेशात् प्रस्तरे तथा ॥ ११ ॥ अहर्गणे विषाणाप्रासनं धर्म-विप्रतिषेधादन्ते प्रथमे वाऽहनि विकल्पः स्यात् ॥ १२ पार्श्वस्त्वश्रुतिभूतत्वाद्विषाणानियमः स्यात् प्रातः सवनमध्यत्वाच्छिष्टे चाभिप्रवृत्तत्वात् ॥ १३ ॥ शिष्टे चाभिप्रवृत्तत्वात् ॥ १४ ॥ वाग्विसर्गो हवि-ष्कृता वीजभेदे तथा स्यात् ॥ १५ ॥ यथाह्वान-मपीति चेत् ॥ १६ ॥ पशौ च परोडाशे समान-तन्त्रं भवेत् ॥ १७ ॥ अङ्गप्रधानार्थो योगः सर्वा-पवर्गे च विमोकः स्यात् ॥ १८ ॥ प्रधानापवर्गे वा तदर्थत्वात् ॥ १९ ॥ अवभृथे च तद्वत् प्रधानार्थस्य प्रतिषेधोऽपवृक्तार्थत्वात् ॥ २० ॥ अहर्गणे च प्रत्यहं स्यात् तदर्थत्वात् ॥ २१ ॥ सुब्रह्मण्या तु तन्त्रं-दी-क्षावदन्यकालत्वात् ॥ २२ ॥ तत्कालत्वादावर्तेत प्रयोगतोविशेषसंयोगात् ॥ २३ ॥ अप्रयोगाङ्गमिति चेत् ॥ २४ ॥ प्रयोगनिर्देशात् कर्तृभेदवत् ॥ २५ तद्भूतस्थानादग्निवदिति चेत् तदपवर्गस्तदर्थत्वात् ॥ २६ ॥ अग्निवदिति चेत् ॥ २७ ॥ न प्रयोगसा-

धारणात् ॥ २८ ॥ लिङ्गदर्शनाच्च ॥ २९ ॥ तद्वि-तथेति चेत् ॥ ३० ॥ नाशिष्टत्वादितरन्यायत्वात् ॥ ३१ ॥ विध्येकत्वादिति चेत् ॥ ३२ ॥ न कृतस्य पुनः प्रयोगात् प्रधानवत् ॥ ३३ ॥ लौकिके तु यथाकामी संस्कारानर्थलोपात् ॥ ३४ ॥ यज्ञायुधानि धार्येरन् प्रतिपत्तिविधानादृजीषवत् ॥ ३५ यजमानसंस्कारो वा तदर्थः श्रूयते तत्र यथाकामी तदर्थत्वात् ॥ ३६ ॥ मुख्यधारणं वा मरणस्यानियतत्वात् ॥ ३७ ॥ यो वा यजनीये म्रियेत सोऽधिकृतः स्यादुवेमवत् ॥ ३८ ॥ न शास्त्रलक्षणत्वात् ॥ ३९ ॥ उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् ॥ ४० ॥ शब्दासामञ्जस्यमिति चेत् ॥ ४१ ॥ तथाशिरेऽपि ॥ ४२ ॥ शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृतावर्थेहा पूर्वार्थवत् भूतोपदेशः ॥ ४३ ॥ प्रकृत्यर्थत्वात् पौर्णमास्याः क्रियेरन् ॥ ४४ ॥ अग्न्याधेयं वा विप्रतिषेधात्तानि धारयेन्मरणस्यानिमित्तत्वात् ॥ ४५ ॥ प्रतिपत्तिर्वा यथान्येषाम् ॥ ४६ ॥ उपरिष्टात् सोमानां प्राजापत्यैश्चरन्तीति ॥ ४७ ॥ अङ्गविर्यासो विनावचनादिति चेत् ॥ ४८ ॥ उत्कर्षः संयोगात् कालमात्रमितरच्च ॥ ४९ ॥ प्रकृतिकाला

सत्तेः पशुवतामिति चेत् ॥ ५० ॥ न श्रुतिप्रतिषेधात् ॥ ५१ ॥ विकारस्थाने इति चेत् ॥ ५२ ॥ न चोदनापृथक्त्वात् ॥ ५३ ॥ उत्कर्षे सूक्तवाकस्य न सोमदेवतानामुत्कर्षः पशुवनङ्गत्वाद्यथानिष्कर्षं नान्वयः ॥ ५४ ॥ वाक्यसंयोगाद्वोत्कर्षः समानतन्त्रत्वादर्थलोपादनन्वयः ॥ ५५ ॥

## एकादशाध्यायस्य चतुर्थः पादः

चोदनैकत्वाद्राजसूयेऽनुक्तदेशकालानां समवायात्तन्त्रमङ्गानि ॥ १ ॥ प्रतिदक्षिणं वा कर्तृसम्बन्धादिष्टिवदङ्गभूतत्वात्समुदायो हि तन्निर्वृत्त्या तदेकत्वादेकशब्दोपदेशः स्यात् ॥ २ ॥ तथा चान्यार्थदर्शनम् ॥ ३ ॥ अनियमः स्यादिति चेत् ॥ ४ ॥ नोपदिष्टत्वात् ॥ ५ ॥ प्रयोजनैकत्वात् ॥ ६ ॥ अविशेषार्था पुनः श्रुतिः ॥ ७ ॥ अयेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात् वचनात् कामसंयोगेन ॥ ८ ॥ क्रत्वर्थायामितिचेन्न वर्णसंयोगात् ॥ ९ ॥ एवमानहविःषु ऐकतन्त्र्यं प्रयोगवचनैकत्वात् ॥ १० ॥ लिङ्गदर्शनाच्च ॥ ११ ॥ सहत्वे नित्यानुवादः स्यात्

॥ १३ ॥ वर्तमानापदेशाद्वचनात्तु तन्त्रभेदः स्यात् ॥ १२ ॥ द्वादशाहे तु प्रकृतित्वादेकैकमहरपवृज्येत कर्मपृथक्त्वात् ॥ १४ ॥ अङ्गानां चाश्रुतिभूतत्वात् तत्र साङ्गं क्रियेत यथा माध्यन्दिने ॥ १५ ॥ अपि वा फलकर्तृसम्बन्धात् सहप्रयोगः स्यादाग्नेयाग्नीषोमीयवत् ॥ १६ ॥ साङ्गकालश्रुतित्वाद्वा स्वस्थानानां विकारः स्यात् ॥ १७ ॥ दीक्षोपसदां च संख्या पृथक् पृथक् प्रत्यक्षसंयोगात् ॥ १८ ॥ वसतीवरीपर्य्यन्तानि पूर्वाणि तन्त्रमन्यकालत्वादवभृथादीन्युत्तराणि दीक्षाविसर्गार्थत्वात् ॥ १९ ॥ तथा चान्यार्थदर्शनम् ॥ २० ॥ चोदनापृथक्त्वे त्वैकतन्त्र्यं समवेतानां कालसंयोगात् ॥ २१ ॥ भेदस्तु तद्भेदात् कर्मभेदः प्रयोगे स्यात् तेषां प्रधानशब्दत्वात् ॥ २२ ॥ तथा चान्यार्थदर्शनम् ॥ २३ ॥ श्वासुत्यावचनं तद्वत् ॥ २४ ॥ पश्वतिरेकश्च ॥ २५ ॥ सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादावाहनवत् ॥ २६ ॥ अपि वेन्द्राभिधानत्वात् सकृत् स्यादुपलक्षणं कालस्य लक्षणार्थत्वात् ॥ २७ अविभागाच्च ॥ २८ ॥ पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात् तन्त्रभावः स्यात् ॥ २९ ॥ भेदस्तु

सन्देहाद्द्रव्यान्तरे स्यात् ॥ ३० ॥ अर्थाद्वा लिङ्ग-कर्म स्यात् ॥ ३१ प्रतिपाद्यत्वाद्दत्तानां भेदः स्यात् स्वयाज्याप्रदानत्वात् ॥ ३२ ॥ अपि वा प्रतिपत्ति-त्वात् तन्त्रं स्यात् स्वत्वस्याश्रुतिभूतत्वात् ॥ ३३ ॥ सक्तादिति चेत् ॥ ३४ ॥ न कालभेदात् ॥ ३५ ॥ पक्तिभेदात् कुम्भीशूलवपाश्रपणीनां भेदः स्यात् ॥ ३६ ज्यात्यन्तरेषु भेदः स्यात् पक्तिवैषम्यात् ॥ ३७ ॥ वृद्धिदर्शनाच्च ॥ ३८ ॥ कपालानि च कुम्भीवत्स्य संख्यानात् ॥ ३९ ॥ प्रतिप्रधानं वा प्रकृतिवत् ॥ ४० ॥ सर्वेषां वाभिप्रथमं स्यात् ॥ ४१ ॥ एक-द्रव्ये संस्काराणां व्याख्यातमेककर्मत्वात् ॥ ४२ ॥ द्रव्यान्तरे कृतार्थत्वात् तस्य पुनः प्रयोगान्मन्त्रस्य च तद्गुणत्वात् पुनः प्रयोगः स्यात्तदर्थे न विधानात् ॥ ४३ ॥ निर्वपणलवनस्तरणाज्यग्रहणेषु चैकद्रव्यवत् प्रयोजनैकत्वात् ॥ ४४ ॥ द्रव्यान्तरवद्वा स्यात् तत् संस्कारात् ॥ ४५ ॥ वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनः प्रयोगात् ॥ ४६ ॥ एकस्य वा गुणविधिः द्रव्यै-कत्वात् तस्मात् सकृत्प्रयोगः स्यात् ॥ ४७ ॥ कण्डू-यने प्रत्यङ्गं कर्मभेदात् स्यात् ॥ ४८ ॥ अपि वा चोदनैककालमैककर्म्यं स्यात् ॥ ४९ ॥ स्वपन्नदी-

तस्याभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् ॥ ५० ॥ प्रयाणे त्वार्थनिर्वृत्तेः ॥ ५१ ॥ उपरवमन्त्रत्वं स्याल्लोकवद्बहुवचनात् ॥ ५२ ॥ न सन्निपातित्वाद-सन्निपातिकर्मणां विशेषग्रहणे कालैकत्वात् ॥ ५३ हविष्कृद्ध्रिगुपुरोऽनुवाक्यामनीतस्यावृत्तिं कालभे-दात् स्यात् ॥ ५४ ॥ अध्रिगोश्च विपर्यासात् ॥५५ ॥ करिष्यद्वचनात् ॥ ५६ ॥

द्वादशाध्यायस्य प्रथमः पादः

---

तन्त्रिसमवाये चोदनातः समानानामेकतन्त्रम-तुल्येषु तु भेदः स्यात् विधिप्रक्रमतादर्थ्यात् स्तुति कालनिर्देशात् ॥ १ ॥ गुणकालविकाराच्च तन्त्र-भेदः स्यात् ॥ २ ॥ तन्त्रमध्ये विधानाद्वा मुख्यत-न्त्रेण सिद्धिः स्यात्तन्त्रार्थस्याविशिष्टत्वात् ॥ ३ ॥ विकाराच्च न भेदः स्यादर्थस्य विकृतत्वात् ॥ ४ ॥ एकेषां वा शक्यत्वात् ॥ ५ ॥ आहोपुरीषकं स्यात् ॥ ६ ॥ एकाग्निवच्च दर्शनम् ॥ ७ ॥ जैमिनेः परत-न्त्रत्वापत्तेः स्वतन्त्रः प्रतिषेधः स्यात् ॥ ८ ॥ नाना-र्थत्वात् सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात्

॥ ९ ॥ अकर्म वा कृतदूषा स्यात् ॥ १० ॥ पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात् ॥ ११ ॥ न्याय्यानि वा प्रयुक्तत्वादप्रयुक्ते प्रसङ्गः स्यात् ॥ १२ ॥ शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात् ॥ १३ ॥ श्रपणं वाऽग्निहोत्रस्य शालामुखीयेन स्यात् प्राजहितस्य विद्यमानत्वात् ॥ १४ ॥ हविर्धाने निर्वपणार्थं साधयतां प्रयुक्तत्वात् ॥ १५ ॥ असिद्धिर्वाऽन्यदेशत्वात् प्रधानवैगुण्यादवैगुण्ये प्रसङ्गः स्यात् ॥ १६ ॥ अनसाञ्च दर्शनात् ॥ १७ ॥ तद्युक्तत्वञ्च कालभेदात् ॥ १८ ॥ मन्त्राश्च सन्निपातित्वात् ॥ १९ ॥ धारणार्थत्वात् सोमेऽग्न्यन्वाधानं न विद्यते ॥ २० ॥ तथा व्रतमुपेतत्वात् ॥ २१ ॥ विप्रतिषेधाच्च ॥ २२ सत्यवदिति चेत् ॥ २३ ॥ न संयोगपृथक्त्वात् ॥ २४ ॥ ग्रहार्थं च पूर्वमिष्टेस्तदर्थत्वात् ॥ २५ ॥ शेषवदिति चेन्न वैश्वदेवो हि स्याद् व्यपदेशात् ॥ २६ ॥ न गुणार्थत्वात् ॥ २७ ॥ सन्नहनञ्च वृत्तत्वात् ॥ २८ ॥ अन्यविधानादारण्यभोजनं न स्यादुभयं ह्यर्थम् ॥ २९ ॥ शेषभक्षास्तथेति चेत् नान्यार्थत्वात् ॥ ३० ॥ भृतत्वाच्च परिक्रयः ॥ ३१ ॥ शेषभक्षास्तथेति चेत् ॥ ३२ ॥ न कर्मसंयोगात् ॥ ३३

प्रवृत्तवरणात् प्रतितन्त्रवरणात् प्रतितन्त्रवरणं होतुः क्रियेत ॥ ३४ ॥ ब्रह्मापीति चेत् ॥ ३५ ॥ न प्राक् नियमात्तदर्थं हि ॥ ३६ ॥ निर्दिष्टस्येति चेत् ॥ ३७ नाश्रुतत्वात् ॥ ३८ ॥ होतुस्तथेति चेत् ॥ ३९ ॥ न कर्मसंयोगात् ॥ ४० ॥ यज्ञोत्पत्त्युपदेशे निष्ठितकर्मप्रयोगभेदात् प्रतितन्त्रं क्रियेत ॥ ४१ ॥ देशपृथक्त्वात् मन्त्रो व्यावर्त्तते ॥ ४२ ॥ सन्नहनहरणे तथेति चेत् ॥ ४३ ॥ नान्यार्थत्वात् ॥ ४४ ॥

## द्वादशाध्यायस्य द्वितीयः पादः

विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात् ॥ १ ॥ मांसपाकप्रतिषेधश्च तद्वत् ॥ २ ॥ निर्देशाद् वा वैदिकानां स्यात् ॥ ३ ॥ सति चोपासनस्य दर्शनात् ॥ ४ ॥ अभावदर्शनाच्च ॥ ५ ॥ मांस पाको विहितप्रतिषेधः स्यादाहुतिसंयोगात् ॥ ६ ॥ वाक्यशेषो वा दक्षिणस्मिन्ननारभ्य विधानस्य ॥ ७ ॥ सवनीये छिद्रापिधानार्थत्वात् पशुपुरोडाशो न स्यादन्येषामेवमर्थत्वात् ॥ ८ ॥ क्रिया वा देवता-

र्थत्वात् ॥ ९ ॥ लिङ्गदर्शनाच्च ॥ १० ॥ हविष्कृत्स-वनीयेषु न स्यात् प्रकृतौ यदि सर्वार्थां पशुं प्रत्याहूता सा कुर्याद् विद्यमानत्वात् ॥ ११ ॥ पशौ-तु संस्कृते विधानात् ॥ १२ ॥ योगाद्वा यज्ञाय तद्विमोके विसर्गः स्यात् ॥ १३ ॥ निशियज्ञे प्राकृतस्यापवृत्तिः स्यात् प्रत्यक्षशिष्टत्वात् ॥ १४ ॥ काल वाक्यभेदाच्च तन्त्रभेदः स्यात् ॥ १५ ॥ वेद्युद्धनन-व्रतं विप्रतिषेधात्तदेव स्यात् ॥ १६ ॥ तन्त्रमध्ये विधानाद्वा तत्तन्त्रा सवनीयवत् ॥ १७ ॥ वैगुण्या-द्विध्मबर्हिर्न साधयेदग्न्यन्वाधानं च यदि देवता-र्थम् ॥ १८ ॥ अग्न्यन्वाधनञ्च यदि देवतार्थम् ॥ १९ ॥ आरम्भणीया विकृतौ न स्यात् प्रकृति-काल मध्यत्वात् कृता पुनस्तदर्थेन ॥ २० ॥ स्यात्-दारम्भसंयोगात् ॥ २१ ॥ स्याद्वा कालशेषभूतत्वात् ॥ २२ ॥ आरम्भविभागाच्च ॥ २३ ॥ विप्रतिषिद्ध-धर्माणां समवाये भूयसां स्यात् सधर्म्मकत्वम् ॥ २४ मुख्यं वा पूर्वचोदनाल्लोकवत् ॥ २५ ॥ तथा चान्या र्थदर्शनम् ॥ २६ ॥ अङ्गगुणविरोधे च तादर्थ्यात् ॥ २७ ॥ परिधिद्व्यर्थत्वादुभयधर्मा स्यात् ॥ २८ ॥

यौप्यस्तु विरोधे स्यान्मुख्यानन्तर्यात् ॥ २९ ॥ इतरो वा तस्य तत्र विधानात् उभयोश्चाङ्गसंयोगः ॥३० ॥ पशुसवनीयेषु विकल्पः स्यात् वैकृतश्चेदुभयोरस्तुतिभूतत्वात् ॥ ३१ ॥ पाशुकं वा वैशेषिकाम्नानात्तदनर्थकं विकल्पे स्यात् ॥ ३२ ॥ पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात् ॥ ३३ ॥ अपूर्वं च प्रकृतौ समानतन्त्रा चेदनित्यत्वादनर्थकं हि स्यात् ॥ ३४ ॥ अधिकश्च गुणः साधारणे विरोधात् कांस्यभोजिवदमुख्ये ऽपि ॥ ३५ ॥ तत्प्रवृत्त्या तु तन्त्रस्य नियमः स्याद्यथा पाशुकं सूक्तवाकेन ॥ ३६ ॥ न वाऽविरोधात् ॥ ३७ ॥ शास्त्रलक्षणत्वाच्च ॥ ३८ ॥

## द्वादशाध्यायस्य तृतीयः पादः

विश्वजिति वत्सत्वग्नामधेयाऽहतमितरथा तन्तुभूयस्त्वादहतं स्यात् ॥ १ ॥ अविरोधो वा उपरिवासो हि वत्सत्वक् ॥ २ ॥ अनुनिर्वाप्येषु भूयस्त्वेन तंत्रनियमः स्यात् शिष्टकृद्दर्शनाच्च ॥ ३ ॥ आगन्तुकत्वाद्वा स्वधर्मा स्यात श्रुतिविशेषादितरस्य च सुख्यत्वात् ॥ ४ ॥ स्वस्थानत्वाच्च ॥ ५ ॥

श्लिष्टकृकृपवाक्नेति चेद् विकारः पवमानवत् ॥ ६ अविकारो वा प्रकृतिवच्चोदनां प्रतिभावाच्च ॥ ७ ॥ एककर्मणि शिष्टत्वाद् गुणानां सर्वकर्म स्यात् ॥ ८ ॥ एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिः स्यात् प्रधानस्य ॥ ९ ॥ अभ्यस्येतार्थवत्त्वादिति चेत् ॥ १० ॥ नाश्रुतत्वात् विकल्पवच्च दर्शयति कालान्तरेऽर्थवत्त्वं स्यात् ॥ ११ ॥ प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात् सर्वस्य निर्घातः ॥ १२ ॥ समुच्चयस्तु दोषार्थः ॥ १३ ॥ मंत्राणां कर्मसंयोगः स्वधर्मेण प्रयोगः स्यात् धर्मस्य तन्निमित्तत्वात् ॥ १४ ॥ विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगः स्यात् कर्मार्थत्वात् प्रयोगस्य ॥ १५ ॥ भाषास्वरोपदेशे ऐरवदाम्नायवचनप्रतिषेधः स्यात् ॥ १६ ॥ सन्त्रोपदेशो वा न भाषिकस्य प्रायोपपत्तेर्भाषिकश्रुतिः ॥ १७ ॥ विकारः कारणाग्रहणे तन्न्यायत्वाददृष्टेऽप्येवम् ॥ १८ ॥ तदुत्पत्तेर्वा प्रवचनलक्षणत्वात् ॥ १९ ॥ मंत्राणां करणार्थत्वात् मंत्रान्तेन कर्मादिसन्निपातः स्यात् सर्वस्य वचनार्थत्वात् ॥ २० ॥ सन्ततवचनाद्धारायामादि संयोगः ॥ २१ ॥ कर्मसन्तानो वा नानाकर्मत्वादितरस्या-

शक्यत्वात् ॥ २२ ॥ आघारे च दीर्घधारत्वात् ॥ २३ ॥ मंत्राणां सन्निपातित्त्वादेकार्थानां विकल्पः स्यात् ॥ २४ ॥ संख्याविहितेषु समुच्चयो सन्निपातित्वात् ॥ २५ ॥ ब्राह्मणविहितेषु च संख्यावत् सर्वेषामुपदिष्टत्वात् ॥ २६ ॥ याज्यावषट्कारयोश्च समुच्चयदर्शनं तद्वत् ॥ २७ ॥ विकल्पो वा समुच्चयस्याश्रुतित्वात् ॥ २८ ॥ गुणार्थत्वादुपदेशस्य ॥ २९ ॥ वषट्कारे नानार्थत्वात् समुच्चयः होत्रास्तु विकल्पेरन्नेकार्थत्वात् ॥ ३० ॥ क्रियमाणानुवादित्वात् समुच्चयो वा होत्राणाम् ॥ ३१ ॥ समुच्चयं च दर्शयति ॥ ३२ ॥

## द्वादशाध्यायस्य चतुर्थः पादः

——:*:——

जपाश्चाकर्मयुक्ताःस्तुत्याशीरभिधानाश्च याजमानेषु समुच्चयः स्यादाशीः पृथक्त्वात् ॥ १ ॥ समुच्चयं च दर्शयति ॥ २ ॥ याज्यानुवाक्यासु तु विकल्पः स्याद्देवतोपलक्षणार्थत्वात् ॥ ३ ॥ लिङ्गदर्शनाच्च ॥ ४ क्र्येषु त्वविकल्पः स्यादेकार्थत्वात् ॥ ५ ॥ समुच्चयो वा प्रयोगद्रव्यसमवायात् ॥ ६ ॥ समुच्चयश्च दर्श-

यति ॥ ७ ॥ संस्कारे च तत्प्रधानत्वात् ॥ ८ ॥ संख्यास्तु तु विकल्पः स्यात् श्रुतिप्रतिषेधात् ॥ ९ ॥ द्रव्यविकारात्तु पूर्ववदर्थकर्म स्यात् तया विकल्पेन नियमप्रधानत्वात् ॥ १० ॥ द्रव्यत्वेऽपि समुच्चयोद्रव्यकर्मनिष्पत्तेः प्रतिपशुकर्मभेदादेवं सति यथाप्रकृति ॥ ११ ॥ कपालेऽपि तथेति चेत् ॥ १२ न कर्मणः परार्थत्वात् ॥ १३ ॥ प्रतिपत्तिस्तु शेषत्वात् ॥ १४ ॥ श्रुतेऽपि पूर्ववत् स्यात् ॥ १५ ॥ विकल्पोऽन्वर्थकर्मनियमप्रधानत्वात् शेषे च कर्मकार्यसमवायात्तस्मात्तेनार्थकर्म स्यात् ॥ १६ ॥ उखायां काम्यनित्यसमुच्चयो नियोगे कामदर्शनात् ॥ १७ ॥ तस्य च देवतार्थत्वात् ॥ १८ ॥ विकारो वा नित्यस्याग्नेः काम्येन तदुक्तहेतुः ॥ १९ ॥ वचनादसंस्कृतेषु कर्म स्यादिति ॥ १९ ॥ संसर्गे चापि दोषः स्यात् ॥ २० ॥ वचनादिति चेदथेतरस्मिन्नुत्सर्गो परिग्रहः कर्मणः कृतत्वात् ॥ २१ ॥ स आहवनीयः स्यादाहुतिसंयोगात् ॥ २२ ॥ अन्यो वोद्धृत्याहरणात् तस्मिंस्तु संस्कारकर्मशिष्टत्वात् ॥ २३ ॥ स्थानात्तु परिलुप्येरन् ॥ २४ ॥ नित्यधारणे विकल्पो न ह्यकस्मात् प्रतिषेधः स्यात् ॥ २५

नित्यधारणाद्वा प्रतिषेधो गतश्रियः ॥ २६ ॥ परार्थान्येकः प्रतियन्तिवत्सत्राहीनयोर्यजमानगणे अनियमोऽविशेषात् ॥ २६ ॥ मुख्यो वा विप्रतिषेधात् ॥ २७ ॥ सत्रे गृहपतिरसंयोगाद्धोत्रवत् आम्नायवचनाच्च ॥ २८ ॥ सर्वेषां वा तदर्थत्वात् ॥ २६ ॥ विप्रतिषेधे परम् ॥ ३० ॥ हौत्रे परार्थत्वात् ॥ ३१ ॥ वचनं परम् ॥ ३२ ॥ प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ॥ ३३ ॥ स्मृतेर्वा स्याद् ब्राह्मणानाम् ॥ ३४ ॥ फलचमसविधानाच्चेतरेषाम् ॥ ३४ ॥ साद्म्येऽप्येवं प्रतिषेधः सोमपीथहेतुत्वात् ॥ ३५ ॥ चतुर्धाकरणे च निर्देशात् ॥ ३६ ॥ अन्वाहार्य्ये च दर्शनात् ॥ ३७ ॥

॥ इति ॥

# ओं

# सांख्यदर्शनम्

महामुनि कणाद विरचितम्

सूत्रम्

लवपुरे

विरजानन्द यन्त्रालये

मुद्रितम्

मूल्य ।)॥ डाक व्यय )॥

# साङ्ख्यदर्शनम्

## ॥ प्रथमाध्यायः ॥

अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः ॥ १ ॥ न दृष्टात् तत्सिद्धिर्निवृत्तेऽप्यनुवृत्तिदर्शनात् ॥ २ ॥ प्रात्यहिकक्षुत्प्रतीकारवत् तत्प्रतीकारचेष्टनात् पुरुषार्थत्वम् ॥ ३ ॥ सर्वासम्भवात् सम्भवेऽपि सत्त्वासम्भवाद्धेयः प्रमाणकुशलैः ॥ ४ ॥ उत्कर्षादपि मोक्षस्य सर्वोत्कर्षश्रुतेः ॥ ५ ॥ अविशेषश्चोभयोः ॥ ६ ॥ न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः ॥ ७ ॥ स्वभावस्यानपायित्वादननुष्ठानलक्षणमप्रामाण्यम् ॥ ८ ॥ नाशक्योपदेशविधिरुपदिष्टेऽप्यनुपदेशः ॥ ९ ॥ शुक्लपटवद्बीजवच्चेत् ॥ १० ॥ शक्त्युद्भवानुद्भवाभ्यां नाशक्योपदेशः ॥ ११ ॥ न कालयोगतो व्यापिनो नित्यस्य सर्वसम्बन्धात् ॥ १२ ॥ न देशयोगतोऽप्यस्मात् ॥ १३ ॥ नावस्थातो देहधर्मत्वा

त्तस्याः ॥ १४ ॥ असङ्गोऽयं पुरुष इति ॥ १५ ॥
न कर्मणान्यधर्मत्वादतिप्रसक्तेश्च ॥ १६ ॥ विचित्र
भोगानुपपत्तिरन्यधर्मत्वे ॥ १७ ॥ प्रकृतिनिबन्ध
नाच्चेन्न तस्यापि पारतन्त्र्यम् ॥ १८ ॥ न नित्य
शुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते ॥ १९ ॥
नाविद्यातोऽप्यवस्तुना बन्धायोगात् ॥ २० ॥ वस्तु
त्वे सिद्धान्तहानिः ॥ २१ ॥ विजातीयद्वैतापत्तिश्च
॥ २२ ॥ विरुद्धोभयरूपा चेत् ॥ २३ ॥ न तादृक्
पदार्थाप्रतीतेः ॥ २४ ॥ न वयं षट्पदार्थवादिनो
वैशेषिकादिवत् ॥ २५ ॥ अनियतत्वेऽपि नायौक्ति
कस्य संग्रहोऽन्यथा बालोन्मत्तादिसमत्वम् ॥ २६ ॥
नानादिविषयोपरागनिमित्तकोऽप्यस्य ॥ २७ ॥ न
बाह्याभ्यन्तरयोरुपरज्योपरञ्जकभावोऽपि देशव्यव
धानात् स्रुघ्नस्थपाटलिपुत्रस्थयोरिव ॥ २८ ॥ द्वयो
रेकदेशलब्धोपरागान्न व्यवस्था ॥ २९ ॥ अदृष्टवशा
च्चेत् ॥ ३० ॥ न द्वयोरेककालायोगादुपकार्य्योप
कारकभावः ॥ ३१ ॥ पुत्रकर्मवदिति चेत् ॥ ३२ ॥
नास्ति हि तत्र स्थिर एकात्मा यो गर्भाधानादिना
संस्क्रियते ॥ ३३ ॥ स्थिरकार्य्यासिद्धेः क्षणिकत्वम्
॥ ३४ ॥ न प्रत्यभिज्ञाबाधात् ॥ ३५ ॥ श्रुतिन्या-

यविरोधाच्च ॥ ३६ ॥ दृष्टान्तासिद्धेश्च ॥ ३७ ॥ युगपज्जायमानयोर्न कार्यकारणभावः ॥ ३८ ॥ पूर्वापाये उत्तरायोगात् ॥ ३९ ॥ तद्भावे तदयोगादुभयव्यभिचारादपि न ॥ ४० ॥ पूर्वभावमात्रे न नियमः ॥ ४१ ॥ न विज्ञानमात्रं वाह्यप्रतीतेः ॥ ४२ ॥ तदभावे तदभावाच्छून्यं तर्हि ॥ ४३ ॥ शून्यं तत्त्वं भावो विनश्यति वस्तुधर्मत्वाद्विनाशस्य ॥ ४४ अपवादमात्रमबुद्धानाम् ॥ ४५ ॥ उभयपक्षसमानक्षेमत्वादयमपि ॥ ४६ ॥ अपुरुषार्थत्वमुभयथा ॥ ४७ न गतिविशेषात् ॥ ४८ ॥ निष्क्रियस्य तदसम्भवात् ॥ ४९ ॥ मूर्तत्वाद्घटादिवत् समानधर्मापत्तावपसिद्धान्तः ॥ ५० ॥ गतिश्रुतिरप्युपाधियोगादाकाशवत् ॥ ५१ ॥ न कर्मणाप्यतद्धर्मत्वात् ॥ ५२ ॥ अतिप्रसक्तिरन्यधर्मत्वे ॥ ५३ ॥ निर्गुणादिश्रुतिविरोधश्चेति ॥ ५४ ॥ तद्योगोऽप्यविवेकान्न समानत्वम् ॥ ५५ ॥ नियतकारणात् तदुच्छित्तिर्ध्वान्तवत् ॥ ५६ प्रधानाविवेकादन्याविवेकस्य तद्धाने हानम् ॥ ५७ ॥ वाङ्मात्रं न तु तत्त्वं चित्तस्थितेः ॥ ५८ ॥ युक्तितोऽपि न बाध्यते दिङ्मूढवदपरोक्षादृते ॥ ५९ ॥

अत्यक्षाणामनुमानेन बोधो धूमादिभिरिव वह्नेः ॥ ६० ॥ सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात् पञ्च तन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्यः स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गणः ॥ ६१ ॥ स्थूलात् पञ्चतन्मात्रस्य ॥ ६२ ॥ बाह्याभ्यन्तराभ्यां तैश्चाहङ्कारस्य ॥ ६३ ॥ तेनान्तःकरणस्य ॥ ६४ ॥ ततः प्रकृतेः ॥ ६५ ॥ संहतपरार्थत्वात् पुरुषस्य ॥ ६६ ॥ मूले मूलाभावादमूलं मूलम् ॥ ६७ ॥ पारम्पर्येऽप्येकत्र परिनिष्ठेति संज्ञामात्रम् ॥ ६८ ॥ समानः प्रकृतेर्द्वयोः ॥ ६९ ॥ अधिकारित्रैविध्यान्न नियमः ॥ ७० महदाख्यमाद्यं कार्यं तन्मनः ॥ ७१ ॥ चरमोऽहङ्कारः ॥ ७२ ॥ तत्कार्यत्वमुत्तरेषाम् ॥ ७३ ॥ आद्यहेतुता तद्द्वारा पारम्पर्येऽप्यणुवत् ॥ ७४ ॥ पूर्वभावित्वे द्वयोरेकतरस्य हानेऽन्यतरयोगः ॥ ७५ ॥ परिच्छिन्नं न सर्वोपादानम् ॥ ७६ ॥ तदुत्पत्तिश्रुतेश्च ॥ ७७ ॥ नावस्तुनो वस्तुसिद्धिः ॥ ७८ ॥ अबाधाददुष्टकारणजन्यत्वाच्च नावस्तुत्वम् ॥ ७९ ॥ भावे तद्योगेन तत्सिद्धिरभावे तदभावात् कुतस्तरां तत्सिद्धिः ॥ ८० ॥ न कर्मण उपादानत्वायोगात्

॥ ८१ ॥ नानुश्रविकादपि तत्सिद्धिः साध्यत्वेनावृत्तियोगादपुरुषार्थत्वम् ॥ ८२ ॥ तत्र प्राप्तविवेकस्याऽनावृत्तिस्श्रुतिः ॥ ८३ ॥ दुःखाद्दुःखं जलाभिषेकवन्न जाड्यविमोकः ॥ ८४ ॥ काम्ये ऽकाम्ये ऽपि साध्यत्वाविशेषात् ॥ ८५ ॥ निजमुक्तस्य बन्धध्वंसमात्रं परं न समानत्वम् ॥ ८६ ॥ द्वयोरेकतरस्य वाप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमा तत्साधकतमं यत् तत् ॥ ८७ ॥ त्रिविधं प्रमाणम्तत्सिद्धौ सर्वसिद्धेर्नाधिक्यसिद्धिः ॥ ८८ ॥ यत् सम्बद्धं सत् तदाकारोल्लेखि विज्ञानं तत् प्रत्यक्षम् ॥ ८९ ॥ योगिनामवाह्यप्रत्यक्षत्वान्न दोषः ॥ ९० ॥ लीनवस्तुलब्धातिशयसम्बन्धाद्वा ऽदोषः ॥ ९१ ॥ ईश्वरासिद्धेः ॥ ९२ ॥ मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः ॥ ९३ ॥ उभयथाप्यसत्करत्वम् ॥ ९४ ॥ मुक्तात्मनः प्रशंसा उपासासिद्धस्य वा ॥ ९५ ॥ तत्सन्निधानादधिष्ठातृत्वम् मणिवत् ॥ ९६ ॥ विशेषकार्येष्वपि जीवानाम् ॥ ९७ ॥ सिद्धरूपबोद्धृत्वाद्वाक्यार्थोपदेशः ॥ ९८ ॥ अन्तःकरणस्य तदुज्ज्वलितत्वाल्लोहवदधिष्ठातृत्वम् ॥ ९९ ॥ प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम् ॥ १०० आप्तोपदेशः शब्दः ॥ १०१ ॥ उभयसिद्धिः प्रमा-

णात् तदुपदेशः ॥ १०२ ॥ सामान्यतो दृष्टादुभय सिद्धिः ॥ १०३ ॥ चिदवसानो भोगः ॥ १०४ ॥ अकर्तुरपि फलोपभोगोऽन्नाद्यवत् ॥ १०५ ॥ अवि-वेकाद्वा तत्सिद्धेः कर्तुः फलावगमः ॥ १०६ ॥ नोभयं च तत्त्वाख्याने ॥ १०७ ॥ विषयोऽविषयोऽप्यतिदूरादेर्हानोपादानाभ्यामिन्द्रियस्य ॥ १०८ ॥ सौक्ष्म्यात् तदनुपलब्धिः ॥ १०९ ॥ कार्यदर्शनात् तदुपलब्धेः ॥ ११० ॥ वादिविप्रतिपत्तेस्तदसिद्धि-रिति चेत् ॥ १११ ॥ तथाप्येकतरदृष्ट्याएकतर-सिद्धेर्नापलापः ॥ ११२ ॥ त्रिविधविरोधापत्तेश्च ॥ ११३ ॥ नासदुत्पादो नृशृङ्गवत् ॥ ११४ ॥ उपा दाननियमात् ॥ ११५ ॥ सर्वत्र सर्वदा सर्वासम्भवात् ॥ ११६ ॥ शक्तस्य शक्यकरणात् ॥ ११७ ॥ कारण भावाच्च ॥ ११८ ॥ न भावे भावयोगश्चेत् ॥ ११९ नाभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ ॥ १२० ॥ नाशः कारणलयः ॥ १२१ ॥ पारम्पर्यतोऽन्वे षणा बीजाङ्कुरवत् ॥ १२२ ॥ उत्पत्तिवद्वाऽदोषः ॥ १२३ ॥ हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ॥ १२४ ॥ आञ्जस्यादभेदतो वा गुणसामा

न्यादेस्तत्सिद्धिः प्रधानव्यपदेशाद्वा ॥ १२५ ॥ त्रिगुणाचेतनत्वादि द्वयोः ॥ १२६ ॥ प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योऽन्यं वैधर्म्यम् ॥ १२७ ॥ लघ्वादिधर्मैः साधर्म्यं वैधर्म्यं च गुणानाम् ॥ १२८ ॥ उभयान्यत्वात् कार्यत्वं महदादेर्घटादिवत् ॥ १२९ परिमाणात् ॥ १३० ॥ समन्वयात् ॥ १३१ ॥ शक्तितश्चेति ॥ १३२ ॥ तद्धाने प्रकृतिः पुरुषो वा ॥ १३३ ॥ तयोरन्यत्वे तुच्छत्वम् ॥ १३४ ॥ कार्यात् कारणानुमानं तत्साहित्यात् ॥ १३५ ॥ अव्यक्तं त्रिगुणाल्लिङ्गात् ॥ १३६ ॥ तत्कार्यतस्तत्सिद्धेर्नापलापः ॥ १३७ ॥ सामान्येन विवादाभावाद्धर्मवन्नसाधनम् ॥ १३८ ॥ शरीरादिव्यतिरिक्तः पुमान् ॥ १३९ संहतपरार्थत्वात् ॥ १४० ॥ त्रिगुणादिविपर्ययात् ॥ १४१ ॥ अधिष्ठानाच्चेति ॥ १४२ ॥ भोक्तृभावात् ॥ १४३ ॥ कैवल्यार्थं प्रवृत्तेः ॥ १४४ ॥ जडप्रकाशायोगात् प्रकाशः ॥ १४५ ॥ निर्गुणत्वान्न चिद्धर्मा ॥ १४६ ॥ श्रुत्या सिद्धस्य नापलापस्तत्प्रत्यक्षबाधात ॥ १४७ ॥ सुषुप्त्याद्यसाक्षित्वम् ॥ १४८ ॥ जन्मादिव्यवस्थातः पुरुषबहुत्वम् ॥ १४९ ॥ उपाधिभे

देऽपोक्षस्य नानायोग आग्रस्येव घटादिभिः ॥ १५० उपाधिर्भिद्यतेन तु तद्वान् ॥ १५१ ॥ एवमेक त्वेन परिवर्त्तमानस्य न विरुद्धधर्माध्यासः ॥ १५२ अन्यधर्मत्वेऽपि नारोपात् तत्सिद्धिरेकत्वात् ॥ १५३ नाद्वैतश्रुतिविरोधो जातिपरत्वात् ॥ १५४ ॥ विदि तबन्धकारणस्य दृष्ट्यातद्रूपम् ॥ १५५ ॥ नान्धा दृष्ट्या चक्षुष्मतामनुपलम्भः ॥ १५६ ॥ वामदेवा दिर्मुक्तो नाद्वैतम् ॥ १५७ ॥ अनादावद्य यावद भावाद्भविष्यदप्येवम् ॥ १५८ ॥ इदानीमिव सर्वत्र नात्यन्तोच्छेदः ॥ १५९ ॥ व्यावृत्तोभयरूपः ॥ १६० साक्षात्सम्बन्धात् साक्षित्वम् ॥ १६१ ॥ नित्यमु क्तत्वम् ॥ १६२ ॥ औदासीन्य चेति ॥ १६३ ॥ उपरागात्कर्तृत्वं चित्तसान्निध्याच्चित्सान्निध्यादिति ॥ १६४ ॥

---

॥ द्वितीयाध्यायः ॥

विमुक्तमोक्षार्थं स्वार्थं वा प्रधानस्य ॥ १ ॥ विर क्तस्य तत्सिद्धेः ॥ २ ॥ न श्रवणमात्रात् तत्सिद्

नादिवासनाया बलवत्त्वात् ॥ ३ ॥ बहुभृत्यवद्वा प्रत्येकम् ॥ ४ ॥ प्रकृतिवास्तवे च पुरुषस्याध्यास-सिद्धिः ॥ ५ ॥ कार्यतस्तत्सिद्धेः ॥ ६ ॥ चेतनोद्देशा न्नियमः कण्टकमोक्षवत् ॥ ७ ॥ अन्ययोगेऽपि तत्सिद्धिर्नाञ्जस्येनायो दाहवत् ॥ ८ ॥ रागविराग-योर्योगः सृष्टिः ॥ ९ ॥ महदादिक्रमेण पञ्चभूता-नाम् ॥ १० ॥ आत्मार्थत्वात् सृष्टेर्नैषामात्मार्थ आरम्भः ॥ ११ ॥ दिक्कालावाकाशादिभ्यः ॥ १२ ॥ अध्यवसायो बुद्धिः ॥ १३ ॥ तत्कार्यं धर्मादि ॥ १४ महदुपरागाद्विपरीतम् ॥ १५ ॥ अभिमानोऽहंकारः ॥ १६ ॥ एकादशपञ्चतन्मात्रं तत्कार्यम् ॥ १७ ॥ सात्त्विकमेकादशकं पवर्तते वैकृतादहंकारात् ॥ १८ कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम् ॥ १९ ॥ आ-हंकारिकत्वश्रुतेर्न भौतिकानि ॥ २० ॥ देवतालय श्रुतिर्नारम्भकस्य ॥ २१ ॥ तदुत्पत्तिश्रुतेर्विनाश दर्शनाच्च ॥ २२ ॥ अतीन्द्रियमिन्द्रियं भ्रान्तानाम-धिष्ठाने ॥ २३ ॥ शक्तिभेदेऽपि भेदसिद्धौ नैकत्वम् ॥ २४ ॥ न कल्पनाविरोधः प्रमाणदृष्टस्य ॥ २५ ॥ उभयात्मकं मनः ॥ २६ ॥ गुणपरिणामभेदान्नाना-

त्वमवस्थावत् ॥ २७ ॥ रूपादिरसमलान्तउभयोः ॥ २८ ॥ द्रष्टृत्वादिरात्मनः करणत्वमिन्द्रियाणाम् ॥ २९ ॥ त्रयाणां स्वालक्षण्यम् ॥ ३० ॥ सामान्य करणवृत्तिः प्राणाद्या वायवः पंच ॥ ३१ ॥ क्रमशोऽक्रमशश्चेन्द्रियवृत्तिः ॥ ३२ ॥ वृत्तयः पंचतय्यः क्लिष्टाक्लिष्टाः ॥ ३३ ॥ तन्निवृत्तावुपशान्तोपरागः स्वस्थः ॥ ३४ ॥ कुसुमवच्च मणिः ॥ ३५ ॥ पुरुषार्थं करणोद्भवोऽप्यदृष्टोल्लासात् ॥ ३६ ॥ धेनुवद्वत्साय ॥ ३७ ॥ करणं त्रयोदशविधमवान्तरभेदात् ॥ ३८ ॥ इन्द्रियेषु साधकतमत्वगुणयोगात् कुठारवत् ॥ ३९ ॥ द्वयोः प्रधानं मनो लोकवद्भृत्यवर्गेषु ॥ ४० ॥ अव्यभिचारात् ॥ ४१ ॥ तथा शेषसंस्काराधारत्वात् ॥ ४२ स्मृत्यानुमानाच्च ॥ ३३ ॥ सम्भवेन्नस्वतः ॥ ४४ ॥ आपेक्षिको गुणप्रधानभावः क्रियाविशेषात् ॥ ४५ तत्कर्मार्जितत्वात् तदर्थमभिचेष्टा लोकवत् ॥ ४६ समानकर्मयोगे बुद्धेः प्राधान्यं लोकवल्लोकवत् ॥ ४७

---

## तृतीयाध्यायः

अविशेषाद्विशेषारम्भः ॥ १ ॥ तस्माच्छरीरस्य ॥ २

तद्बीजात् संसृतिः ॥ ३ ॥ आविवेकाच्च प्रवर्त्तनमविशेषानाम् ॥ ४ ॥ उपभोगादितरस्य ॥ ५ ॥ सम्प्रति परिमुक्तो द्वाभ्याम् ॥ ६ ॥ मातापितृजं स्थूलं प्रायश इतरन्न तथा ॥ ७ ॥ पूर्वोत्पत्ते स्तत्कार्यत्वं भोगादेकस्य नेतरस्य ॥ ८ ॥ सप्तदशैकं लिङ्गम् ॥ ९ ॥ व्यक्तिभेदः कर्मविशेषात् ॥ १० ॥ तदधिष्ठानाश्रये देहे तद्वादात् तद्वादः ॥ ११ ॥ न स्वातन्त्र्यात् तदृते छायावच्चित्रवच्च ॥ १२ ॥ मूर्तत्वेऽपि न संघातयोगात् तरणिवत् ॥ १३ ॥ अणुपरिमाणं तत् कृतिश्रुतेः ॥ १४ ॥ तदन्नमयत्वश्रुतेश्च ॥ १५ ॥ पुरुषार्थं संसृतिर्लिङ्गानां सूपकारवद्राज्ञः ॥ १६ ॥ पांचभौतिको देहः ॥ १७ ॥ चातुर्भौतिकमित्येके ॥ १८ ॥ ऐकभौतिकमित्यपरे ॥ १९ ॥ न सांसिद्धिकं चैतन्यं प्रत्येकादृष्टेः ॥ २० ॥ प्रपंचमरणाद्यभावश्च ॥ २१ ॥ मदशक्तिवच्चेत् प्रत्येकपरिदृष्टे सांहत्ये तदुद्भवः ॥ २२ ज्ञानान्मुक्तिः ॥ २३ ॥ बन्धो विपर्ययात् ॥ २४ ॥ नियतकारणत्वान्न समुच्चयविकल्पौ ॥ २५ ॥ स्वप्नजागराभ्यामिव मायिकामायिकाभ्यां नोभयोर्मुक्तिः पुरुषस्य ॥ २६ ॥ इतरस्यापि नात्यन्तिकम् ॥ २७ ॥

संकल्पितेऽप्येवम् ॥ २८ ॥ भावनोपचयाच्छुद्धस्य सर्वं प्रकृतिवत् ॥ २९ ॥ रागोपहतिर्ध्यानम् ॥ ३० वृत्तिनिरोधात् तत्सिद्धिः ॥ ३१ ॥ धारणासनस्व-कर्मणा तत्सिद्धिः ॥ ३२ ॥ निरोधश्छर्दिविधार-णाभ्याम् ॥ ३३ ॥ स्थिरसुखमासनम् ॥ ३४ ॥ स्वकर्म स्वाश्रमविहितकर्मानुष्ठानम् ॥ ३५ ॥ वैरा-ग्यादभ्यासाच्च ॥ ३६ ॥ विपर्ययभेदाः पंच ॥ ३७ ॥ अशक्तिरष्टाविंशतिधा तु ॥ ३८ ॥ तुष्टिर्नवधा ॥ ३९ सिद्धिरष्टधा ॥ ४० ॥ अवान्तरभेदाः पूर्ववत् ॥ ४१ एवमितरस्याः ॥ ४२ ॥ आध्यात्मिकादिभेदान्नवधा तुष्टिः ॥ ४३ ॥ ऊहादिभिः सिद्धिः ॥ ४४ ॥ नेतरा-दितरहानेन बिना ॥ ४५ ॥ दैवादिप्रभेदा ॥ ४६ ॥ आब्रह्मस्तम्भपर्यन्तं तत्कृते सृष्टिराविवेकात् ॥ ४७ ऊर्ध्वं सत्त्वविशाला ॥ ४८ ॥ तमोविशाला मूलतः ॥ ४९ ॥ मध्ये रजोविशाला ॥ ५० ॥ कर्मवैचित्र्यात् प्रधानचेष्टा गर्भदासवत् ॥ ५१ ॥ आवृत्तिस्तत्राप्यु-त्तरोत्तरयोनियोगाद्धेयः ॥ ५२ ॥ समानं जरामरणा-दिजं दुःखम् ॥ ५३ ॥ न कारणलयात् कृतकृत्यता मग्नवदुत्थानात् ॥ ५४ ॥ अकार्यत्वेऽपि तद्योगः

पारवश्यात् ॥ ५५ ॥ स हि सर्ववित् सर्वकर्ता ॥ ५६ ईदृशेश्वरसिद्धिः सिद्धा ॥ ५७ ॥ प्रधानसृष्टिः परार्थं स्वतो ऽप्यभोक्तृत्वादुष्ट्रकुङ्कुमवहनवत् ॥ ५८ ॥ अचेतनत्वे ऽपि क्षीरवच्चेष्टितं प्रधानस्य ॥ ५९ ॥ कर्मवद् दृष्टेर्वा कालादेः ॥ ६० ॥ स्वभावाच्चेष्टितमनभिसन्धानाद्भृत्यवत् ॥ ६१ ॥ कर्माकृष्टेर्वा नादितः ॥ ६२ ॥ विविक्तबोधात् सृष्टिनिवृत्तिः प्रधानस्य सूदवत् पाके ॥ ६३ ॥ इतर इतरवत् तद्दोषात् ॥ ६४ ॥ द्वयोरेकतरस्य वौदासीन्यमपवर्गः ॥ ६५ ॥ अन्यसृष्ट्युपरागे ऽपि न विरज्यते प्रबुद्धरज्जुतत्त्वस्यैवोरगः ॥ ६६ ॥ कर्मनिमित्तयोगाच्च ॥ ६७ ॥ नैरपेक्ष्ये ऽपि प्रकृत्युपकारे ऽविवेको निमित्तम् ॥ ६८ ॥ नर्तकीवत् प्रवृत्तस्यापि निवृत्तिश्चारितार्थ्यात् ॥ ६९ दोषबोधे ऽपि नोपसर्पणं प्रधानस्य कुलवधूवत् ॥ ७० नैकान्ततो बन्धमोक्षौ पुरुषस्याविवेकादृते ॥ ७१ ॥ प्रकृतेराञ्जस्यात् ससंगत्वात् पशुवत् ॥ ७२ ॥ रूपैः सप्तभिरात्मानं बध्नाति प्रधानं कोशकारवद्विमोचयत्येकरूपेण ॥ ७३ ॥ निमित्तत्वमविवेकस्य न दृष्टहानिः ॥ ७४ ॥ तत्त्वाभ्यासान्नेति नेतीति त्यागाद्विवेकसिद्धिः ॥ ७५ ॥ अधिकारिप्रभेदान्न

नियमः ॥ ७६ ॥ बाधितानुवृत्त्या मध्यविवेकतोऽप्यु-पभोगः ॥ ७७ ॥ जीवन्मुक्तश्च ॥ ७८ ॥ उपदेश्योपदेष्टृत्वात् तत्सिद्धिः ॥ ७९ ॥ श्रुतिश्च ॥ ८० ॥ इतरथान्धपरम्परा ॥ ८१ ॥ चक्रभ्रमणवद्धृतशरीरः ॥ ८२ संस्कारलेशतस्तत्सिद्धिः ॥ ८३ ॥ विवेकान्निःशेष-दुःखनिवृत्तौ कृतकृत्यता नेतरान्नेतरात् ॥ ८४ ॥

---

## चतुर्थाध्यायः

राजपुत्रवत् तत्त्वोपदेशात् ॥ १ ॥ पिशाचवदन्यार्थोपदेशेऽपि ॥ २ ॥ आवृत्तिरसकृदुपदेशात् ॥ ३ ॥ पितापुत्रवदुभयोर्दृष्टत्वात् ॥ ४ ॥ श्येनवत् सुख-दुःखी त्यागवियोगाभ्याम् ॥ ५ ॥ अहिनिर्ल्वयिनी-वत् ॥ ६ ॥ छिन्नहस्तवद्वा ॥ ७ ॥ असाधनानुचिन्तनं बन्धाय भरतवत् ॥ ८ ॥ बहुभिर्योगे विरोधो रागा-दिभिः कुमारीशंखवत् ॥ ९ ॥ द्वाभ्यामपि तथैव ॥ १० ॥ निराशः सुखी पिंगलावत् ॥ ११ ॥ अना-रम्भेऽपि परगृहे सुखी सर्पवत् ॥ १२ ॥ बहुशास्त्र-गुरूपासनेऽपि सारादानं षट्पदवत् ॥ १३ ॥ इषु-कारवन्नैकचित्तस्य समाधिहानिः ॥ १४ ॥ कृतनिय

मलंघनाद्दानर्थक्यं लोकवत् ॥ १५ ॥ तद्विस्मरणे ऽपि भेकीवत् ॥ १६ ॥ नोपदेशश्रवणे ऽपि कृतकृत्यता परामर्शादृते विरोचनवत् ॥ १७ ॥ दृष्टस्तयोरिन्द्रस्य ॥ १८ ॥ प्रणतिब्रह्मचर्योपसर्पणानि कृत्वा सिद्धिर्बहुकालात् तद्वत् ॥ १९ ॥ न कालनियमो वामदेववत् ॥ २० ॥ अध्यस्तरूपोपासनात् पारम्पर्येण यज्ञोपासकानामिव ॥ २१ ॥ इतरलाभे ऽप्यावृत्तिः पञ्चाग्नियोगतो जन्मश्रुतेः ॥ २२ ॥ विरक्तस्य हेयहानमुपादेयोपादानं हंसक्षीरवत् ॥ २३ ॥ लब्धातिशययोगाद्वा तद्वत् ॥ २४ ॥ न कामचारित्वं रागोपहते शुकवत् ॥ २५ ॥ गुणयोगाद्बद्धः शुकवत् ॥ २६ ॥ न भोगाद्रागशान्तिर्मुनिवत् ॥ २७ ॥ दोषदर्शनादुभयोः ॥ २८ ॥ न मलिनचेतस्युपदेशबीजप्ररोहो ऽजवत् ॥ २९ ॥ नाभासमात्रमपि मलिनदर्पण वत् ॥ ३० ॥ न तज्जस्यापि तद्रूपता पंकजवत् ॥ ३१ ॥ न भूतियोगे ऽपि कृतकृत्यतोपास्यासिद्धिवदुपास्यसिद्धिवत् ॥ ३२ ॥

## पंचमाध्यायः

मंगलाचरणं शिष्टाचारात् फलदर्शनात् श्रुति

तस्येति ॥ १ ॥ नेश्वराधिष्ठिते फलनिष्पत्तिः कर्मणा तत्सिद्धेः ॥ २ ॥ स्वोपकारादधिष्ठानं लोकवत् ॥ ३ लौकिकेश्वरवदितरथा ॥ ४ ॥ पारिभाषिको वा ॥ ५ न रागादृते तत्सिद्धिः प्रतिनियतकारणत्वात् ॥ ६ ॥ तद्योगेऽपि न नित्यमुक्तः ॥ ७ ॥ प्रधानशक्तियोगाच्चेत् संगापत्ति ॥ ८ ॥ सत्तामात्राच्चेत् सर्वैश्वर्यम ॥ ९ ॥ प्रमाणाभावान्न तत्सिद्धिः ॥ १० ॥ सम्बन्धाभावान्नानुमानम् ॥ ११ ॥ श्रुतिरपि प्रधानकार्यत्वस्य ॥ १२ ॥ नाविद्याशक्तियोगो निःसंगस्य ॥ १३ ॥ तद्योगे तत्सिद्धावन्योऽन्याश्रयत्वम् ॥ १४ ॥ न बीजांकुरवत् सादिसंसारश्रुतेः ॥ १५ ॥ विद्यातोऽन्यत्वे ब्रह्मबाधप्रसङ्गः ॥ १६ ॥ अबाधे नैष्फल्यम् ॥ १७ ॥ विद्याबाधत्वे जगतोऽप्येवम् ॥ १८ ॥ तद्रूपत्वे सादित्वम् ॥ १९ ॥ न धर्मापलापः प्रकृतिकार्यवैचित्र्यात् ॥ २० ॥ श्रुतिलिङ्गादिभिस्तत्सिद्धिः ॥ २१ ॥ न नियमः प्रमाणान्तरावकाशात् ॥ २२ ॥ उभयत्राप्येवम् ॥ २३ ॥ अर्थात् सिद्धिश्चेत् समानमुभयोः ॥ २४ ॥ अन्तःकरणधर्मत्वं धर्मादीनाम् ॥ २५ ॥ गुणादीनां च नात्यन्तबाधः

॥ २६ ॥ पञ्चावयवयोगात् सुखसंवित्तिः ॥ २७ ॥ नसकृद्ग्रहणात् सम्बन्धसिद्धिः ॥ २८ ॥ नियतधर्मसाहित्यमुभयोरेकतरस्य वा व्याप्तिः ॥ २९ ॥ न तत्त्वान्तरं वस्तुकल्पनाप्रसक्तेः ॥ ३० ॥ निजशक्त्युद्भवमित्याचार्याः ॥ ३१ ॥ आधेयशक्तियोग इति पञ्चशिखः ॥ ३२ ॥ न स्वरूपशक्तिर्नियमः पुनर्वा-दप्रसक्तेः ॥ ३३ ॥ विशेषणानर्थक्यप्रसक्तेः ॥ ३४ ॥ पल्लवादिष्वनुपपत्तेश्च ॥ ३५ ॥ आधेयशक्तिसिद्धौ निजशक्तियोगः समानन्यायात् ॥ ३६ ॥ वाच्यवा-चकभावः सम्बन्धः शब्दार्थयोः ॥ ३७ ॥ त्रिभिः सम्बन्ध-सिद्धिः ॥ ३८ ॥ न कार्ये नियम उभयथा दर्शनात् ॥ ३९ ॥ लोके व्युत्पन्नस्य वेदार्थप्रतीतिः ॥ ४० ॥ न त्रिभिरपौरुषेयत्वाद्वेदस्य तदर्थस्यातीन्द्रियत्वात् ॥ ४१ ॥ न यज्ञादेः स्वरूपतो धर्मत्वं वैशिष्ट्यात् ॥ ४२ ॥ निजशक्तिर्व्युत्पत्त्या व्यवच्छिद्यते ॥ ४३ ॥ योग्यायोग्येषु प्रतीतिजनकत्वात् तत्सिद्धिः ॥ ४४ ॥ न नित्यत्वं वेदानां कार्यत्वश्रुतेः ॥ ४५ ॥ न पौरुषे-यत्वं तत्कर्त्तुः पुरुषस्याभावात् ॥ ४६ ॥ मुक्तामुक्त-योरयोग्यत्वात् ॥ ४७ ॥ नापौरुषेयत्वान्नित्यत्वमङ्कु-

रादिवत् ॥ ४८ ॥ तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः ॥ ४९ ॥ यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत्पौरुषेयम् ॥ ५० ॥ निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम् ॥ ५१ ॥ नासतःख्यानं नृशृङ्गवत् ॥ ५२ ॥ न सतो बाधदर्शनात् ॥ ५३ ॥ नानिर्वचनीयस्य तदभावात् ॥ ५४ ॥ नान्यथाख्यातिः स्ववचोव्याघातात् ॥ ५५ ॥ सदसत्ख्यातिर्बाधाबाधात् ॥ ५६ ॥ प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः ॥ ५७ ॥ न शब्दनित्यत्वं कार्यताप्रतीतेः ॥ ५८ ॥ पूर्वसिद्धसत्त्वस्याभिव्यक्तिर्दीपेनेव घटस्य ॥ ५९ ॥ सत्कार्य सिद्धान्तश्चेत् सिद्धसाधनम् ॥ ६० ॥ नाद्वैतमात्मनो लिङ्गात् तद्भेदप्रतीतेः ॥ ६१ ॥ नानात्मनापि प्रत्यक्षबाधात् ॥ ६२ ॥ नोभाभ्यां तेनैव ॥ ६३ ॥ अन्यपरत्वमविवेकानां तत्र ॥ ६४ ॥ नात्माविद्या नोभयं जगदुपादानकारणं निःसङ्गत्वात् ॥ ६५ ॥ नैकस्यानन्दचिद्रूपत्वे द्वयोर्भेदात् ॥ ६६ ॥ दुःखनिवृत्तेर्गौणः ॥ ६७ ॥ विमुक्तिप्रशंसा मन्दानाम् ॥ ६८ ॥ न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा ॥ ६९ ॥ सक्रियत्वाद्गतिश्रुतेः ॥ ७० ॥ न निर्भा

गत्वं तद्योगाद्घटवत् ॥ ७१ ॥ प्रकृतिपुरुषयोरन्यत् सर्वमनित्यम् ॥ ७२ ॥ न भागलाभो भोगिनो निर्भागत्वश्रुतेः ॥ ७३ ॥ नानन्दाभिव्यक्तिर्मुक्तिर्निर्धर्मत्वात् ॥ ७४ ॥ न विशेषगुणोच्छित्तिस्तद्वत् ॥ ७५ ॥ न विशेषगतिर्निष्क्रियस्य ॥ ७६ ॥ नाकारोपरागोच्छित्तिः क्षणिकत्वादिदोषात् ॥ ७७ ॥ न सर्वोच्छित्तिरपुरुषार्थत्वादिदोषात् ॥ ७८ ॥ एवं शून्यमपि ॥ ७९ ॥ संयोगाश्च वियोगान्ता इति न देशादिलाभोऽपि ॥ ८० ॥ न भागियोगो भागस्य ॥ ८१ ॥ नाणिमादियोगोऽप्यवश्यंभावित्वात् तदुच्छित्तेरितरयोगवत् ॥ ८२ ॥ नेन्द्रादिपदयोगोऽपि तद्वत् ॥ ८३ ॥ न भूतप्रकृतित्वमिन्द्रियाणामाहङ्कारिकत्वश्रुतेः ॥ ८४ ॥ न षट्पदार्थनियमस्तद्बोधान्मुक्तिः ॥ ८५ ॥ षोडशादिष्वप्येवम् ॥ ८६ ॥ नाणुनित्यता तत्कार्यत्वश्रुतेः ॥ ८७ ॥ न निर्भागत्वं कार्यत्वात् ॥ ८८ ॥ न रूपनिबन्धनात् प्रत्यक्षनियमः ॥ ८९ ॥ न परिमाणचातुर्विध्यं द्वाभ्यां तद्योगात् ॥ ९० ॥ अनित्यत्वेऽपि स्थिरतायोगात् प्रत्यभिज्ञानं सामान्यस्य ॥ ९१ ॥ न तदपलापस्त

स्मात् ॥ ९२ ॥ नान्यनिवृत्तिरूपत्वं भावप्रतीतेः ॥ ९३ ॥ न तत्त्वान्तरं सादृश्यं प्रत्यक्षोपलब्धेः ॥ ९४ ॥ निजशक्त्यभिव्यक्तिर्वा वैशिष्ट्यात् तदुपलब्धेः ॥ ९५ ॥ न संज्ञासंज्ञिसम्बन्धोऽपि ॥ ९६ ॥ न सम्बन्धनित्यतोभयानित्यत्वात् ॥ ९७ ॥ नातः सम्बन्धो धर्मिग्राहकमानबाधात् ॥ ९८ ॥ न समवायोऽस्ति प्रमाणाभावात् ॥ ९९ ॥ उभयत्राप्यन्यथासिद्धेर्न प्रत्यक्षमनुमानं वा ॥ १०० ॥ नानुमेयत्वमेव क्रियाया नेदिष्ठस्य तत्तद्वतोरेवापरोक्षप्रतीतिः ॥ १०१ ॥ न पाञ्चभौतिकं शरीरं बहूनामुपादानायोगात् ॥ १०२ ॥ न स्थूलमिति नियम आतिवाहिकस्यापि विद्यमानत्वात् ॥ १०३ ॥ नाप्राप्तप्रकाशकत्वमिन्द्रियाणामप्राप्तेः सर्वप्राप्तेर्वा ॥ १०४ न तेजोऽपसर्पणात् तैजसं चक्षुर्वृत्तितस्तत्सिद्धेः ॥ १०५ ॥ प्राप्तार्थप्रकाशलिङ्गाद्वृत्तिसिद्धिः ॥ १०६ भागगुणाभ्यां तत्वान्तरं वृत्तिः सम्बन्धार्थं सर्पतीति ॥ १०७ ॥ न द्रव्यनियमस्तद्योगात् ॥ १०८ ॥ न देशभेदेऽप्यन्योपादानतास्मदादिवन्नियमः ॥ १०९ निमित्तव्यपदेशात् तद्व्यपदेशः ॥ ११० ॥ ऊष्मजा-

ण्डजजरायुजोद्भिज्जसाङ्कल्पिकसांसिद्धिकं चेति न नियमः ॥ १११ ॥ सर्वेषु पृथिव्युपादानमसाधारण्यात् तद्व्यपदेशः पूर्ववत् ॥ ११२ ॥ न देहारम्भकस्य प्राणत्वमिन्द्रियशक्तितस्तत्सिद्धेः ॥ ११३ ॥ भोक्तुरधिष्ठानाद्भोगायतननिर्माणमन्यथा पूतिभावप्रसङ्गात् ॥ ११४ ॥ भृत्यद्वारा स्वाम्यधिष्ठितिर्नैकान्तात् ॥ ११५ ॥ समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता ॥ ११६ ॥ द्वयोः सबीजमन्यत्र तद्धतिः ॥ ११७ ॥ द्वयोरिव त्रयस्यापि दृष्टत्वान्न तु द्वौ ॥ ११८ ॥ वासनयानर्थख्यापनं दोषयोगेऽपि न निमित्तस्य प्रधानबाधकत्वम् ॥ ११९ ॥ एकः संस्कारः क्रियानिर्वर्तको न तु प्रतिक्रियं संस्कारभेदा बहुकल्पनाप्रसक्तेः ॥ १२० ॥ न बाह्यबुद्धिनियमो वृक्षगुल्मलतौषधिवनस्पतितृणवीरुधादीनामपि भोक्तृभोगायतनत्वं पूर्ववत् ॥ १२१ ॥ स्मृतेश्च ॥ १२२ ॥ न देहमात्रतः कर्माधिकारित्वं वैशिष्ट्यश्रुतेः ॥ १२३ ॥ त्रिधा त्रयाणां व्यवस्था कर्मदेहोपभोगदेहोभयदेहाः ॥ १२४ ॥ न किञ्चिदप्यनुशयिनः ॥ १२५ ॥ न बुद्ध्यादिनित्यत्वमाश्रयविशेषेऽपि वह्निवत् ॥ १२६

आश्रयासिद्धेश्च ॥ १२७ ॥ योगसिद्धयोऽप्यौषधादिसिद्धिवन्नापलपनीयाः ॥ १२८ ॥ न भूतचैतन्यं प्रत्येकादृष्टेः सांहत्ये ऽपि च सांहत्येऽपि च ॥ १२९

## षष्ठाध्यायः

अस्त्यात्मा नास्तित्वसाधनाभावात् ॥ १ ॥ देहादिव्यतिरिक्तो ऽसौ वैचित्र्यात् ॥ २ ॥ षष्ठीव्यपदेशादपि ॥ ३ ॥ न शिलापुत्रवद्धर्मिग्राहकमानबाधात् ॥ ४ ॥ अत्यन्तदुःखनिवृत्त्या कृतकृत्यता ॥ ५ ॥ यथा दुःखात् क्लेशः पुरुषस्य न तथा सुखादभिलाषः ॥ ६ ॥ कुत्रापि को ऽपि सुखीति ॥ ७ ॥ तदपि दुःखशबलमितिदुःखपक्षे निःक्षिपन्ते विवेचकाः ॥ ८ सुखलाभाभावादपुरुषार्थत्वमितिचेन्न द्वैविध्यात् ॥ ९ ॥ निर्गुणत्वमात्मनोऽसङ्गत्वादिश्रुतेः ॥ १० ॥ परधर्मत्वे ऽपितत्सिद्धिरविवेकात् ॥ ११ ॥ अनादिरविवेको ऽन्यथा दोषद्वयप्रसक्तेः ॥ १२ ॥ न नित्यः स्यादात्मवदन्यथानुच्छित्तिः ॥ १३ ॥ प्रतिनियतकारणनाश्यत्वमस्य ध्वान्तवत् ॥ १४ ॥ अत्रापि प्रतिनियमो ऽन्वयव्यतिरेकात् ॥ १५ ॥ प्रकारान्तरासम्भवादविवेक एव बन्धः ॥ १६ ॥ न मुक्तस्य पुनर्बन्ध

योगोऽप्यनावृत्तिश्रुतेः ॥ १७ ॥ अपुरुषार्थत्वमन्यथा ॥ १८ ॥ अविशेषापत्तिरुभयोः ॥ १९ ॥ मुक्तिरन्तरायध्वस्तेर्न परः ॥ २० ॥ तत्राप्यविरोधः ॥ २१ ॥ अधिकारित्रैविध्यान्न नियमः ॥ २२ ॥ दार्ढ्यार्थमुत्तरेषाम् ॥ २३ ॥ स्थिरसुखमासनमिति न नियमः ॥ २४ ॥ ध्यानं निर्विषयं मनः ॥ २५ ॥ उभयथाप्यविशेषश्चेन्नैवमुपरागनिरोधाद्विशेषः ॥ २६ ॥ निःसंगेऽप्युपरागोऽविवेकात् ॥ २७ ॥ जवास्फटिकयोरिव नोपरागः किन्त्वभिमानः ॥ २८ ॥ ध्यानधारणाभ्यासवैराग्यादिभिस्तन्निरोधः ॥ २९ ॥ लयविक्षेपयोर्व्यावृत्त्येत्याचार्याः ॥ ३० ॥ न स्थाननियमश्चित्तप्रसादात् ॥ ३१ ॥ प्रकृतेराद्योपादानतान्येषां कार्यत्वश्रुतेः ॥ ३२ ॥ नित्यत्वेऽपिनात्मनो योगत्वाभावात् ॥ ३३ ॥ श्रुतिविरोधान्न कुतर्कापसदस्यात्मलाभः ॥ ३४ ॥ पारम्पर्येऽपि प्रधानानुवृत्तिरणुवत् ॥ ३५ ॥ सर्वत्र कार्यदर्शनाद्विभुत्वम् ॥ ३६ गतियोगेऽप्याद्यकारणताहानिरणुवत् ॥ ३७ ॥ प्रसिद्धाधिक्यं प्रधानस्य न नियमः ॥ ३८ ॥ सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात् ॥ ३९ ॥ अनुपभोगेऽपि

पुमर्थं सृष्टिः प्रधानस्योष्ट्रकुंकुमवहनवत् ॥ ४० ॥ कर्म वैचित्र्यात् सृष्टिवैचित्र्यम् ॥ ४१ ॥ साम्यवैषम्याभ्यां कार्यद्वयम् ॥ ४२ ॥ विमुक्तबोधान्न सृष्टिः प्रधानस्य लोकवत् ॥ ४३ ॥ नान्योपसर्पणेऽपि मुक्तोपभोगो निमित्ताभावात् ॥ ४४ ॥ पुरुषबहुत्वं व्यवस्थातः ॥ ४५ ॥ उपाधिश्चेत् तत्सिद्धौ पुनर्द्वैतम् ॥ ४६ ॥ द्वाभ्यामपि प्रमाणविरोधः ॥ ४७ ॥ द्वाभ्यामप्यविरोधान्न पूर्वमुत्तरं च साधकाभावात् ॥ ४८ प्रकाशतस्तत्सिद्धौ कर्मकर्तृविरोधः ॥ ४९ ॥ जडव्यावृत्तो जडं प्रकाशयति चिद्रूपः ॥ ५० ॥ न श्रुतिविरोधो रागिणां वैराग्याय तत्सिद्धेः ॥ ५१ ॥ जगत्सत्यत्वमदुष्टकारणजन्यत्वाद्बाधकाभावात् ॥ ५२ ॥ प्रकारान्तरासम्भवात् सदुत्पत्तिः ॥ ५३ ॥ अहङ्कारः कर्ता न पुरुषः ॥ ५४ ॥ चिदवसाना भुक्तिस्तत्कर्मार्जितत्वात् ॥ ५५ ॥ चन्द्रादिलोकेऽप्यावृत्तिर्निमित्तसद्भावात् ॥ ५६ ॥ लोकस्य नोपदेशात् सिद्धिः पूर्ववत् ॥ ५७ ॥ पारम्पर्येण तत्सिद्धौ विमुक्तिश्रुतिः ॥ ५८ ॥ गतिश्रुतेश्च व्यापकत्वेऽप्युपाधियोगाद्भोगदेशकाललाभो व्योमवत् ॥ ५९ ॥ अनधिष्ठितस्य

प्रतिभावप्रसङ्गान्न तत्सिद्धिः ॥ ६० ॥ अदृष्टद्वारा चेदसम्बद्धस्य तदसम्भावाज्जलादिवदंकुरे ॥ ६१ ॥ निर्गुणत्वात् तदसम्भवादहङ्कारधर्मा ह्येते ॥ ६२ विशिष्टस्य जीवत्वमन्वयव्यतिरेकात् ॥ ६३ ॥ अह ङ्कारकर्त्रधीना कार्यसिद्धिर्नेश्वराधीना प्रमाणाभा वात् ॥ ६४ ॥ अदृष्टोद्भूतिवत् सामानत्वम् ॥ ६५ ॥ महतोऽन्यत् ॥ ६६ ॥ कर्मनिमित्तः प्रकृतेः स्वस्वामिभा वोऽप्यनादिर्बीजांकुरवत् ॥ ३७ ॥ अविवेकनिमित्तो वा पञ्चशिखः ॥ ६८ ॥ लिङ्गशरीरनिमित्तक इति सनन्दनाचार्यः ॥ ६९ ॥ यद्वा तद्वा तदुच्छित्तिः पुरु षार्थस्तदुच्छित्तिः पुरुषार्थः ॥ ७० ॥

ओं शम्

---

# ओ३म्

# न्यायदर्शनम्

महामुनि गौतम विरचितम्

सूत्रम्

लवपुरे

विरजानन्द यन्त्रालये

मुद्रितम्

मूल्य /)   डाक व्यय )॥

ओ३म्

# ॥ न्याय दर्शनम् ॥

## ॥ प्रथमोऽध्यायः ॥

### प्रथममाह्निकम्

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ॥ १ ॥ दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः ॥ २ ॥ प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥ ३ ॥ इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकम् प्रत्यक्षम् ॥ ४ ॥ अथ तत्पूर्व्वकं त्रिविधमनुमानम् पूर्ववच्छेषवत् सामान्यतो दृष्टञ्च ॥ ५ ॥ प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ॥ ६ ॥ आप्तोपदेशः शब्दः ॥ ७ ॥ स द्विविधो दृष्टाऽदृष्टार्थत्वात् ॥ ८ ॥ आत्मशरीरेन्द्रियार्थबुद्धिमनः प्रवृत्तिदोषप्रेत्यभाव-

फलदुःखापवर्गास्तु प्रमेयम् ॥ ९ ॥ इच्छाद्वेषप्रयत्न-सुखदुःखज्ञानान्यात्मनो लिंगमिति ॥ १० ॥ चेष्टे-न्द्रियार्थाश्रयः शरीरम् ॥ ११ ॥ घ्राणरसनचक्षुस्-त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ॥ १२ ॥ पृथिव्याप-स्तेजो वायुराकाशमिति भूतानि ॥ १३ ॥ गन्धरस-रूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ॥ १४ ॥ बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ॥ १५ ॥ युगपज्-ज्ञानानुत्पत्तिर्मनसो लिंगम् ॥ १६ ॥ प्रवृत्तिर्वाग्-बुद्धिशरीरारम्भ इति ॥ १७ ॥ प्रवर्त्तनालक्षणा दोषाः ॥ १८ ॥ पुनरुत्पत्तिः प्रेत्यभावः ॥ १९ ॥ प्रवृत्तिदो-षजनितोऽर्थः फलम् ॥ २० ॥ बाधनालक्षणं दुःख-मिति ॥ २१ ॥ तदत्यन्तविमोक्षोऽपवर्गः ॥ २२ ॥ समानानेकधर्म्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्य-व्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः ॥ २३ ॥ यमर्थमधिकृत्य प्रवर्त्तते तत् प्रयोजनम् ॥ २४ ॥ लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टा-न्तः ॥ २५ ॥ तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धा-न्तः ॥ २६ ॥ सर्वतन्त्र प्रतितन्त्राधिकरणाभ्युपगम-संस्थित्यर्थान्तरभावात् ॥ २७ ॥ सर्वतन्त्राविरुद्धस्त-

न्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः ॥ २८ ॥ समान-तन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः ॥ २९ ॥ यत् सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ॥ ३० ॥ अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणम-भ्युपगमसिद्धान्तः ॥ ३१ ॥ प्रतिज्ञाहेतूदाहरणोपन-यनिगमनान्यवयवाः ॥ ३२ ॥ साध्यनिर्देशः प्रतिज्ञा ॥ ३३ ॥ उदाहरणसाधर्म्यात् साध्यसाधनं हेतु ॥ ३४ ॥ तथावैधर्म्यात् ॥ ३५ ॥ साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम् ॥ ३६ ॥ तद्विपर्य्य-याद्वा विपरीतम् ॥ ३७ ॥ उदाहरणापेक्षस्तथेत्युप-संहारो न तथेति वा साध्यस्योपनयः ॥ ३८ ॥ हेत्व-पदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम् ॥ ३९ ॥ अविज्ञाततत्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूह-स्तर्कः ॥ ४० ॥ विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधा-रणं निर्णयः ॥ ४१ ॥

द्वितीयमाह्निकम्

प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ॥ ४२

यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः ॥ ४३ ॥ स प्रतिपक्षस्थापनाहीनो वितण्डा ॥ ४४ ॥ सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः ॥ ४५ ॥ अनैकान्तिकः सव्यभिचारः ॥ ४६ ॥ सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ॥ ४७ ॥ यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ॥ ४८ ॥ साध्याविशिष्टः साध्यत्वात् साध्यसमः ॥ ४९ ॥ कालात्ययापदिष्टः कालातीतः ॥ ५० ॥ वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥ ५१ ॥ तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलञ्चेति ॥ ५२ ॥ अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् ॥ ५३ ॥ सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम् ॥ ५४ ॥ धर्म्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् ॥ ५५ ॥ वाक्छलमेवोपचारच्छलं तदविशेषात् ॥ ५६ ॥ न तदर्थान्तरभावात् ॥ ५७ ॥ अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः ॥ ५८ ॥ साधर्म्यवैधर्म्या-

भ्यां प्रत्यवस्थानं जातिः ॥ ५९ ॥ विप्रतिपत्तिरप्रति-पत्तिश्च निग्रहस्थानम् ॥ ६० ॥ तद्विकल्पाज्जातिनि-ग्रहस्थानबहुत्वम् ॥ ६१ ॥

## ॥ द्वितीयाध्यायः ॥

### प्रथममाह्निकम्

समानानेकधर्म्माध्यवसायादन्यतरधर्म्माध्यवसा॰ याद्वा न संशयः ॥ १ ॥ विप्रतिपत्त्यव्यवस्थाध्यवसा याच्च ॥ २ ॥ विप्रतिपत्तौ च सम्प्रतिपत्तेः ॥ ३ ॥ अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः ॥ ४ ॥ तथाऽत्यन्तसंशय स्तद्धर्म्मसातत्योपपत्तेः ॥ ५ ॥ यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशयेनासं-शयो नात्यन्तसंशयो वा ॥ ६ ॥ यत्र संशयस्तत्रैवमु-त्तरोत्तरप्रसङ्गः ॥ ७ ॥ प्रत्यक्षादीनामप्रामाण्यं त्रैका ल्यासिद्धेः ॥ ८ ॥ पूर्व्वं हि प्रमाणसिद्धौ नेन्द्रियार्थ सन्निकर्षात्प्रत्यक्षोत्पत्तिः ॥ ९ ॥ पश्चात् सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः ॥ १० ॥ युगपत्सिद्धौ प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावो बुद्धीनाम् ॥ ११ त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः ॥ १२ ॥ सर्वप्र

माणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः ॥ १३ ॥ तत्प्रा
माण्ये वा न सर्वप्रमाणविप्रतिषेधः ॥ १४ ॥ त्रैका
ल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत्तत्सिद्धेः ॥ १५
प्रमेयता च तुलाप्रामाण्यवत् ॥ १६ ॥ प्रमाणतः
सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्रसङ्गः ॥ १७ ॥
तद्विनिवृत्तेर्वा प्रमाणान्तरसिद्धिवत् प्रमेयसिद्धिः
॥ १८ ॥ न प्रदीपप्रकाशवत् तत्सिद्धेः ॥ १९ ॥
प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात् ॥ २० ॥ ना
त्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिः ॥ २१ ॥
दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः ॥ २२ ॥ ज्ञान
लिङ्गत्वादात्मनो नानवरोधः ॥ २३ ॥ तदयौगपद्य
लिङ्गत्वाच्च न मनसः ॥ २४ ॥ तैश्चापदेशो ज्ञान
विशेषाणाम् ॥ २५ ॥ व्याहतत्वादहेतुः ॥ २६ ॥
नार्थविशेषप्राबल्यात् ॥ २७ प्रत्यक्षमनुमानमेकदेश
ग्रहणादुपलब्धेः ॥ २८ ॥ न प्रत्यक्षेण यावत्तावद
प्युपलम्भात् ॥ २९ ॥ न चैकदेशोपलब्धिरवयवि
सद्भावात् ॥ ३० ॥ साध्यत्वादवयविनि सन्देहः
॥ ३१ ॥ सर्वाग्रहणमवयव्यसिद्धेः ॥ ३२ ॥ धारणा
कर्षणोपपत्तेश्च ॥ ३३ ॥ सेनावनवद्ग्रहणमिति

चेन्नातीन्द्रियत्वाद्वायूनाम् ॥ ३४ ॥ रोधोपघातसा दृश्येभ्यो व्यभिचारादनुमानमप्रमाणम् ॥ ३५ ॥ नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात् ॥ ३६ ॥ वर्त्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः ॥ ३७ ॥ तयोरप्यभावो वर्त्तमानाभावे तदपेक्षत्वात् ॥ ३८ ॥ नातीतानागतयोरितरेतरापेक्षा सिद्धिः ॥ ३९ ॥ वर्त्तमानाभावे सर्व्वाग्रहणम्प्रत्यक्षानुपपत्तेः ॥ ४० ॥ कृतताकर्तव्यतोपपत्तेस्तूभयथा ग्रहणम् ॥ ४१ ॥ अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः ॥ ४२ ॥ प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ॥ ४३ ॥ प्रत्यक्षेणाप्रत्यक्षसिद्धेः ॥ ४४ ॥ नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्याम इति ॥ ४५ ॥ तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः ॥ ४६ ॥ शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात् ॥ ४७ ॥ उपलब्धेरद्विप्रवृत्तित्वात् ॥ ४८ ॥ सम्बन्धाच्च ॥ ४९ ॥ आप्तोपदेशसामर्थ्याच्छब्दार्थसम्प्रत्ययः ॥ ५० ॥ प्रमाणतोऽनुपलब्धेः ॥ ५१ ॥ पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभावः ॥ ५२ ॥ शब्दार्थव्यवस्थानादप्रतिषेधः ॥ ५३

नसामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य ॥ ५४ ॥ जाति विशेषे चानियमात् ॥ ५५ ॥ तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः ॥ ५६ ॥ न कर्म्मकर्तृसाधनवैगुण्यात् ॥ ५७ ॥ अभ्युपेत्य कालभेदे दोषवचनात् ॥ ५८ ॥ अनुवादोपपत्तेश्च ॥ ५९ ॥ वाक्यविभागस्य चार्थग्रहणात् ॥ ६० ॥ विध्यर्थवादानुवादवचनविनियोगात् ॥ ६१ ॥ विधिर्विधायकः ॥ ६२ ॥ स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ॥ ६३ ॥ विधिविहितस्यानुवचनमनुवादः ॥ ६४ ॥ नानुवादपुनरुक्तयो र्विशेषः शब्दाभ्यासोपपत्तेः ॥ ६५ ॥ शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ॥ ६६ ॥ मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ॥ ६७

द्वितीयमाह्निकम्

न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात् ॥ १ ॥ शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः ॥ २ ॥ अर्थापत्तिरप्रमाणमनैकान्तिकत्वात् ॥ ३ ॥ अनर्थापत्तावर्थापत्त्यभिमानात् ॥ ४ ॥ प्रतिषेधाप्रामाण्यं

चानैकान्तिकत्वात् ॥ ५ ॥ तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् ॥ ६ ॥ नाभावप्रामाण्यम्प्रमेयासिद्धेः ॥ ७ ॥ लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धेः ॥ ८ ॥ असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः ॥ ९ ॥ तत्सिद्धेरलक्षितेष्वहेतुः ॥ १० ॥ न लक्षणावस्थितापेक्षसिद्धेः ॥ ११ ॥ प्रागुत्पत्तेरभावोपपत्तेश्च ॥ १२ ॥ विमर्शहेत्वनुयोगे च विप्रतिपत्तेः संशयः ॥ १३ ॥ आदिमत्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च ॥ १४ ॥ न घटाभावसामान्यनित्यत्वात् नित्येष्वप्यनित्यवदुपचाराच्च ॥ १५ ॥ तत्त्वभाक्तयोर्नानात्वविभागादव्यभिचारः ॥ १६ ॥ सन्तानानुमानविशेषणात् ॥ १७ ॥ कारणद्रव्यस्य प्रदेशशब्देनाभिधानान्नित्येष्वप्यव्यभिचार इति ॥ १८ ॥ प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च ॥ १९ ॥ तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः ॥ २० ॥ अनुपलम्भादप्यनुपलब्धिसद्भाववन्नावरणानुपपत्तिरनुपलम्भात् ॥ २१ ॥ अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ २२ ॥ अ

स्पर्शत्वात् ॥ २३ ॥ न कर्मानित्यत्वात् ॥ २४ ॥
नाणुनित्यत्वात् ॥ २५ ॥ सम्प्रदानात् ॥ २६ ॥
तदन्तरालानुपलब्धेरहेतुः ॥ २७ ॥ अध्यापनाद
प्रतिषेधः ॥ २८ ॥ उभयोः पक्षयोरन्यतरस्याध्याप
नादप्रतिषेधः ॥ २९ ॥ अभ्यासात् ॥ ३० ॥ नान्य
त्वेऽप्यभ्यासस्योपचारात् ॥ ३१ ॥ अन्यदन्यस्माद
नन्यत्वादनन्यदित्यन्यताऽभावः ॥ ३२ ॥ तदभावे
नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः ॥ ३३ ॥
विनाशकारणानुपलब्धेः ॥ ३४ ॥ अश्रवणकारणा
नुपलब्धेः सततश्रवणप्रसङ्गः ॥ ३५ ॥ उपलभ्य
माने चानुपलब्धेरसत्वादनपदेशः ॥ ३६ ॥ पाणि
निमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः ॥ ३७ ॥
विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः
॥ ३८ ॥ अस्पर्शत्वादप्रतिषेधः ॥ ३९ ॥ विभक्त्यन्तरो
पपत्तेश्च समासे ॥ ४० ॥ विकारादेशोपदेशात् संशयः
॥ ४१ ॥ प्रकृतिविवृद्धौ विकारविवृद्धेः ॥ ४२ ॥ न्यून
समाधिकोपलब्धेर्विकाराणामहेतुः ॥ ४३ ॥ नातुल्य
प्रकृतीनां विकारविकल्पात् ॥ ४४ ॥ द्रव्यविकारे

वैषम्यवद्वर्णविकारविकल्पः ॥ ४५ ॥ न विकारधर्मानुपपत्तेः ॥ ४६ ॥ विकारप्राप्तानामपुनरावृत्तेः ॥ ४७ सुवर्णादीनां पुनरापत्तेरहेतुः ॥ ४८ ॥ तद्विकाराणां सुवर्णभावाव्यतिरेकात् ॥ ४९ ॥ वर्णत्वाव्यतिरेकाद्वर्णविकाराणामप्रतिषेधः ॥ ५० ॥ सामान्यवतो धर्मयोगो न सामान्यस्य ॥ ५१ ॥ नित्यत्वे विकारादनित्यत्वे चानवस्थानात् ॥ ५२ ॥ नित्यानामतीन्द्रियत्वात्तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः ॥ ५३ ॥ अनवस्थायित्वे च वर्णोपलब्धिवत्तद्विकारोपपत्तिः ॥ ५४ ॥ विकारधर्मित्वे नित्यत्वाभावात्कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः ॥ ५५ ॥ प्रकृत्यनियमाद्वर्णविकाराणाम् ॥ ५६ ॥ अनियमे नियमान्नानियमः ॥ ५७ ॥ नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः ॥ ५८ ॥ गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकारः ॥५९॥ ते विभक्त्यन्ताः पदम् ॥ ६० ॥ तदर्थे व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः ॥ ६१ ॥ या शब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्युपचयवर्णसमासानुबंधानां व्यक्तावुपचाराद्व्यक्तिः ॥६२॥ न तदन

वस्थानात् ॥ ६३ ॥ सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजशक्तुचन्दनगंगाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः ॥ ६४ ॥ आकृतिस्तदपेक्षत्वात् सत्वव्यवस्थानसिद्धेः ॥ ६५ ॥ व्यक्त्याकृतियुक्तेऽप्यप्रसंगात्प्रोक्षणादीनां मृद्गवके जातिः ॥ ६६ ॥ नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः ॥ ६७ ॥ व्यक्त्याकृतिजातयस्तु पदार्थः ॥ ६८ ॥ व्यक्तिर्गुणविशेषाश्रयो मूर्त्तिः ॥ ६९ आकृतिर्ज्जातिलिंगाख्या ॥ ७० ॥ समानप्रसवात्मिका जातिः ॥ ७१ ॥

## तृतीयाध्यायः

### प्रथममाह्निकम्

दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ॥ १ ॥ न विषयव्यवस्थानात् ॥ २ ॥ तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः ॥ ३ ॥ शरीरदाहे पातकाभावात् ॥ ४ ॥ तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् ॥ ५ ॥ न कार्य्याश्रयकर्तृबधात् ॥ ६ ॥ सव्यदृष्टस्येतरेण

प्रत्यभिज्ञानात् ॥ ७ ॥ नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात् ॥ ८ ॥ एकविनाशे द्वितीयाविनाशान्नैकत्वम् ॥ ९ ॥ अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः ॥ १० ॥ दृष्टान्तविरोधादप्रतिषेधः ॥ ११ इन्द्रियान्तरविकारात् ॥ १२ ॥ न स्मृतेः स्मर्त्तव्यविषयत्वात् ॥ १३ ॥ तदात्मगुणसद्भावादप्रतिषेधः ॥ १४ ॥ अपरिसङ्ख्यानाच्च स्मृतिविषयस्य ॥ १५ ॥ नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात् ॥ १६ ॥ ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् ॥ १७ ॥ नियमश्च निरनुमानः ॥ १८ ॥ पूर्वाभ्यस्तस्मृत्यनुबंधात् जातस्य हर्षभयशोकसम्प्रतिपत्तेः ॥ १९ ॥ पद्मादिषु प्रबोधसंमीलनविकारवत्तद्विकारः ॥ २० नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् ॥ २१ ॥ प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात् ॥ २२ ॥ अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणम् ॥ २३ ॥ नान्यत्र प्रवृत्त्यभावात् ॥ २४ ॥ वीतरागजन्मादर्शनात् ॥ २५ ॥ सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिः ॥ २६ ॥ न संकल्पनिमित्तत्वाद्रागादी-

नाम् ॥ २७ ॥ पार्थिवं गुणान्तरोपलब्धेः ॥ २८ ॥
श्रुतिप्रामाण्याच्च ॥ २९ ॥ कृष्णसारे सत्युपलम्भाद्व्य
तिरिच्य चोपलम्भात् संशयः ॥ ३० ॥ महदणुग्रह-
णात् ॥ ३१ ॥ रश्म्यर्थसन्निकर्षविशेषात् तद्ग्रहणम्
॥ ३२ ॥ तदनुपलब्धेरहेतुः ॥ ३३ ॥ नानुमीयमा-
नस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः ॥ ३४ ॥ द्रव्य-
गुणधर्मभेदाच्चोपलब्धिनियमः ॥ ३५ ॥ अनेकद्रव्य
समवायाद्रूपविशेषाच्चरूपोपलब्धिः ॥ ३६ ॥ कर्म-
कारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः ॥ ३७ ॥
अव्यभिचाराच्च प्रतीघातो भौतिकधर्मः ॥ ३८ ॥
मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः ॥
॥ ३९ ॥ न रात्रावप्यनुपलब्धेः ॥ ४० ॥ बाह्यप्रका-
शानुग्रहाद्विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः।
॥ ४१ ॥ अभिव्यक्तौ चाभिभवात् ॥ ४२ ॥ नक्तंच-
रनयनरश्मिदर्शनाच्च ॥ ४३ ॥ अप्राप्य ग्रहणम् का
चाभ्रपटलस्फटिकान्तरितोपलब्धेः ॥ ४४ ॥ न
कुड्यान्तरितानुपलब्धेरप्रतिषेधः ॥ ४५ ॥ अप्रतिघा-
तात् सन्निकर्षोपपत्तिः ॥ ४६ ॥ आदित्यरश्मेः स्फ-
टिकान्तरेऽपि दाह्येऽविघातात् ॥ ४७ ॥ नेतरेत-

रधर्म्म प्रसंगात् ॥ ४८ ॥ आदर्शोदकयोः प्रसाद-स्वाभाव्याद्रूपोपलब्धिवत्तदुपलब्धिः ॥ ४९ ॥ दृष्टानुमितानां नियोगप्रतिषेधानुपपत्तिः ॥ ५० ॥ स्थानान्यत्वे नानात्वादवयविनानात्वाद्वयविनानास्थानत्वाच्च संशयः ॥ ५१ ॥ त्वगव्यतिरेकात् ॥ ५२ ॥ नेन्द्रियान्तरार्थानुपलब्धेः ॥ ५३ ॥ त्वगवयवविशेषेण धूमोपलब्धिवत्तदुपलब्धिः ॥ ५४ ॥ आहतत्वादहेतुः ॥ ५५ ॥ न युगपदर्थानुपलब्धेः ॥ ५६ ॥ विप्रतिषेधाच्च नत्वगेका ॥ ५७ ॥ इन्द्रियार्थपञ्चत्वात् ॥ ५८ ॥ न तदर्थबहुत्वात् ॥ ५९ ॥ गन्धत्वाद्यव्यतिरेकाद्गन्धादीनामप्रतिषेधः ॥ ६० ॥ विषयत्वाव्यतिरेकादेकत्वम् ॥ ६१ ॥ न बुद्धिलक्षणाधिष्ठानगत्याकृतिजातिपञ्चत्वेभ्यः ॥ ६२ ॥ भूतगुणविशेषोपलब्धेस्तादात्म्यम् ॥ ६३ ॥ गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्य्यन्ताः पृथिव्याः अप्तेजोवायूनां पूर्व्वं पूर्व्वमपोह्याकाशस्योत्तरः ॥ ६४ ॥ न सर्व्वगुणानुपलब्धेः ॥ ६५ ॥ एकैकस्यैवोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः ॥ ६६ ॥ संसर्गाच्चानेक-

गुणाग्रहणम् ॥ ६७ ॥ त्रिष्टं ह्यपरस्परेण ॥ ६८ ॥ न पार्थिवाप्ययोः प्रत्यक्षत्वात् ॥ ६९ ॥ पूर्व्वपूर्व्व गुणोत्कर्षात्तत्तत्प्रधानम् ॥ ७० ॥ तद्व्यवस्थानन्तु भूयस्त्वात् ॥ ७१ ॥ सगुणानामिन्द्रियभावात् ॥ ७२ ॥ तेनैव तस्याग्रहणाच्च ॥ ७३ ॥ न शब्दगुणोपलब्धेः ॥ ७४ ॥ तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ॥ ७५

द्वितीयमाह्निकम्

कर्म्माकाशसाधर्म्यात् संशयः ॥ १ ॥ विषयप्रत्यभिज्ञानात् ॥ २ ॥ साध्यसमत्वादहेतुः ॥ ३ ॥ न युगपदग्रहणात् ॥ ४ ॥ अप्रत्यभिज्ञाने च विनाशप्रसंगः ॥ ५ ॥ क्रमवृत्तित्वादयुगपद्ग्रहणम् ॥ ६ ॥ अप्रत्यभिज्ञानंच विषयान्तरव्यासंगात् ॥ ७ ॥ न गत्यभावात् ॥ ८ ॥ स्फटिकान्यत्वाभिमानवत्तदन्यत्वाभिमानः ॥ ९ ॥ न हेत्वभावात् ॥ १० ॥ स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनामहेतुः ॥ ११ ॥ नियमहेत्वभावाद्यथादर्शनमभ्यनुज्ञा ॥ १२ ॥ नोत्पत्तिविनाशकारणोपलब्धेः ॥ १३ ॥ क्षीरविनाशे कारणानुप

लब्धिवद्बुद्ध्युत्पत्तिवच्च तदुपपत्तिः ॥ १४ ॥ लिंगतो ग्रहणान्नानुपलब्धिः ॥ १५ ॥ न पयसः परिणाम गुणान्तरप्रादुर्भावात् ॥ १६ ॥ व्यूहान्तराद्द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम् ॥ १७ ॥ क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः ॥ १८ ॥ नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् ॥ १९ ॥ युगपज्ज्ञेयानुपलब्धेश्च न मनसः ॥ २० ॥ तदात्मगुणत्वेऽपि तुल्यम् ॥ २१ ॥ इन्द्रियैर्मनसः सन्निकर्षाभावात्तदनुत्पत्तिः ॥ २२ नोत्पत्तिकारणानपदेशात् ॥ २३ ॥ विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसंगः ॥ २४ ॥ अनित्यत्वग्रहाद् बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् ॥ २५ ॥ ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः ॥ २६ ॥ नान्तःशरीरवृत्तित्वान्मनसः ॥ २७ ॥ साध्यत्वादहेतुः ॥ २८ ॥ स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः ॥ २९ ॥ न तदाशुगतित्वान्मनसः ॥ ३० ॥ न स्मरणकालानियमात् ॥ ३१ आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः ॥

॥ ३२ ॥ व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम् ॥ ३३ ॥ प्रणिधानलिंगादिज्ञानानामयुगपद्भावादयुगपदस्मरणम् ॥ ३४ ॥ प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्त्ते यौगपद्यप्रसंगः ॥ ३५ ॥ ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः ॥ ३६ ॥ तल्लिंगत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः ॥ ३७ ॥ परश्वादिष्वारम्भनिवृत्तिदर्शनात् ॥ ३८ ॥ कुम्भादिष्वनुपलब्धेरहेतुः ॥ ३९ ॥ नियमानियमौ तु तद्विशेषकौ ॥ ४० ॥ यथोक्तहेतुत्वात् पारतन्त्र्यादकृताभ्यागमाच्च न मनसः ॥ ४१ ॥ परिशेषाद्यथोक्तहेतूपपत्तेश्च ॥ ४२ ॥ स्मरणन्त्वात्मनोज्ञस्वाभाव्यात् ॥ ४३ ॥ प्रणिधाननिबन्धाभ्यासलिंगलक्षणसादृश्यपरिग्रहाश्रयाश्रित सम्बन्धानन्तर्य्यवियोगैककार्य्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयाऽर्थित्वक्रियारागधर्म्माधर्म्मनिमित्तेभ्यः ॥ ४४ ॥ कर्म्मानवस्थायिग्रहणात् ॥ ४५ ॥ बुद्ध्यवस्थानात् प्रत्यक्षत्वे स्मृत्यभावः ॥ ४६ ॥ अव्यक्तग्रहणमनवस्थायित्वात् विद्युत्सम्पाते रूपाव्यक्त ग्रहणवत् ॥ ४७ ॥ हेतूपादानात् प्रति

षेधाभ्यनुज्ञा ॥ ४८ ॥ प्रदीपार्च्चिः सन्तत्यभिव्यक्त-
ग्रहणवत्तद्ग्रहणम् ॥ ४९ ॥ द्रव्ये स्वगुणपरगुणो-
पलब्धेः संशयः ॥ ५० ॥ यावच्छरीरभावित्वाद्रूपा-
दीनाम् ॥ ५१ ॥ न पाकजगुणान्तरोत्पत्तेः ॥ ५२ ॥
प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ॥ ५३ ॥
शरीरव्यापित्वात् ॥ ५४ ॥ केशनखादिष्वनुपलब्धेः
॥ ५५ ॥ त्वक्पर्य्यन्तत्वाच्छरीरस्य केशनखादिष्वप्र-
संगः ॥ ५६ ॥ शरीरगुणवैधर्म्यात् ॥ ५७ ॥ न रूपा-
दीनामितरेतरवैधर्म्यात् ॥ ५८ ॥ ऐन्द्रियकत्वाद्रूपा
दीनामप्रतिषेधः ॥ ५९ ॥ ज्ञानायौगपद्यादेकं मनः
॥ ६० ॥ न युगपदनेकक्रियोपलब्धेः ॥ ६१ ॥
अलातचक्रदर्शनवत्तदुपलब्धिराशुसंचरात् ॥ ६२ ॥
यथोक्तहेतुत्वाच्चाणु ॥ ६३ ॥ पूर्वकृतफलानुबन्धात्त-
दुत्पत्तिः ॥ ६४ ॥ भूतेभ्योमूर्त्त्युपादानवत् तदुपादा
नम् ॥ ६५ ॥ न साध्यसमत्वात् ॥ ६६ ॥ नोत्पत्ति-
निमित्तत्वान्मातापित्रोः ॥ ६७ ॥ तथाहारस्य ॥ ६८
प्राप्तौ चानियमात् ॥ ६९ ॥ शरीरोत्पत्तिनिमित्तवत्
संयोगोत्पत्तिनिमित्तं कर्म्म ॥ ७० ॥ एतेनानियमः

प्रत्युक्तः ॥ ७१ ॥ उपपन्नश्च तद्वियोगः कर्म्मक्षयोपपत्तेः ॥ ७२ ॥ तद्दृष्टकारितमितिचेत् पुनस्तत्प्रसंगोऽपवर्गे ॥ ७३ ॥ न करणाकरणयोरारम्भदर्शनात् ॥ ७४ ॥ मनःकर्म्मनिमित्तत्वाच्च संयोगानुच्छेदः ॥ ७५ ॥ नित्यत्वप्रसंगश्च प्रायणानुपपत्तेः ॥ ७६ ॥ अणुश्यामतानित्यत्ववदेतत् स्यात् ॥ ७७ ॥ नाकृताभ्यागमप्रसंगात् ॥ ७८ ॥

## चतुर्थाध्यायः

### प्रथममाह्निकम्

प्रवृत्तिर्यथोक्ता ॥ १ ॥ तथा दोषाः ॥ २ ॥ तत् त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ॥ ३ ॥ नैकप्रत्यनीकभावात् ॥ ४ ॥ व्यभिचारादहेतुः ॥ ५ ॥ तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः ॥ ६ ॥ प्राप्तस्तर्हि निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः ॥ ७ ॥ न दोषलक्षणावरोधान्मोहस्य ॥ ८ ॥ निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः ॥ ९ ॥ आत्मनित्यत्वे प्रेत्यभावसिद्धिः ॥ १० ॥

व्यक्ताद्व्यक्तानां प्रत्यक्षप्रामाण्यात् ॥ ११ ॥ न घटाद्घटानिष्पत्तेः ॥ १२ ॥ व्यक्ताद्घटनिष्पत्तेरप्रतिषेधः ॥ १३ ॥ अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् ॥ १४ ॥ व्याघातादप्रयोगः ॥ १५ ॥ नातीतानागतयोः कारकशब्दप्रयोगात् ॥ १६ ॥ न विनष्टेभ्योऽनिष्पत्तेः ॥ १७ ॥ क्रमनिर्देशादप्रतिषेधः ॥ १८ ॥ ईश्वरः कारणं पुरुषकर्म्माफल्यदर्शनात् ॥ १९ ॥ न पुरुषकर्म्माभावे फलानिष्पत्तेः ॥ २० ॥ तत्कारितत्वादहेतुः ॥ २१ ॥ अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् ॥ २२ ॥ अनिमित्तनिमित्तत्वान्नानिमित्ततः ॥ २३ ॥ निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः ॥ २४ ॥ सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् ॥ २५ ॥ नानित्यतानित्यत्वात् ॥ २६ ॥ तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत् ॥ २७ ॥ नित्यस्याप्रत्याख्यानं यथोपलब्धिव्यवस्थानात् ॥ २८ ॥ सर्वं नित्यं पञ्चभूतनित्यत्वात् ॥ २९ नोत्पत्तिविनाशकारणोपलब्धेः ॥ ३० ॥ तल्लक्षणावरोधादप्रतिषेधः ॥ ३१ ॥ नोत्पत्तितत्कारणोपलब्धेः ॥ ३२ ॥ न व्यवस्थानुपपत्तेः ॥ ३३ ॥ सर्वं

पृथग्भावलक्षणपृथक्त्वात् ॥ ३४ ॥ नानेकलक्षणैरे
कभावनिष्पत्तेः ॥ ३५ ॥ लक्षणव्यवस्थानादेवा
प्रतिषेधः ॥ ३६ ॥ सर्वमभावो भावेष्वितरेतराभाव
सिद्धेः ॥ ३७ ॥ न स्वभावसिद्धेर्भावानाम् ॥ ३८ ॥
न स्वभावसिद्धिरापेक्षिकत्वात् ॥ ३९ ॥ व्याहतत्वा
दयुक्तम् ॥ ४० ॥ संख्यैकान्ता सिद्धिः कारणानुप
पत्त्युपपत्तिभ्याम् ॥ ४१ ॥ न कारणावयवभावात्
॥ ४२ ॥ निरवयवत्वादहेतुः ॥ ४३ ॥ सद्यः काला
न्तरे च फलनिष्पत्तेः संशयः ॥ ४४ ॥ न सद्यः का
लान्तरोपभोग्यत्वात् ॥ ४५ ॥ कालान्तरेणानिष्पत्तिर्हे
तुविनाशात् ॥ ४६ ॥ प्राङ्निष्पत्तेर्वृक्षफलवत्तत्स्यात्
॥ ४७ ॥ नासन्नसन्नसदसत्सदसतोर्वैधर्म्यात् ॥ ४८ ॥
उत्पादव्ययदर्शनात् ॥ ४९ ॥ बुद्धिसिद्धन्तु तदसत्
॥ ५० ॥ आश्रयव्यतिरेकाद्वृक्षफलोत्पत्तिवदित्य
हेतुः ॥ ५१ ॥ प्रीतेरात्माश्रयत्वादप्रतिषेधः ॥ ५२ ॥
न पुत्रपशुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्देशात्
॥ ५३ ॥ तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुप
चारः ॥ ५४ ॥ विविधबाधनायोगाद्दुःखमेव जन्मो
त्पत्तिः ॥ ५५ ॥ न सुखस्यान्तरालनिष्पत्तेः ॥ ५६ ॥

बाधनाऽनिवृत्तेर्वेदयतः पर्य्येषणादोषादप्रतिषेधः ॥
॥ ५७ ॥ दुःखविकल्पे सुखाभिमानाच्च ॥ ५८ ॥
ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः ॥ ५९ ॥ प्रधान
शब्दानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः ।
॥ ६० ॥ अधिकाराच्च विधानं विद्यान्तरवत् ॥ ६१
समारोपणादात्मन्यप्रतिषेधः ॥ ६२ ॥ सुषुप्तस्य स्व
प्नादर्शने क्लेशाभावादपवर्गः ॥ ६३ ॥ न प्रवृत्तिः
प्रतिसन्धानाय हीनक्लेशस्य ॥ ६४ ॥ न क्लेशसन्ततेः
स्वाभाविकत्वात् ॥ ६५ ॥ प्रागुत्पत्तेरभावानित्य
त्ववत्स्वाभाविकेऽप्यनित्यत्वम् ॥ ६६ ॥ अणुश्याम
ताऽनित्यत्ववद्वा ॥ ६७ ॥ न संकल्पनिमित्तत्वाच्च
रागादीनाम् ॥ ६८ ॥

द्वितीयमाह्निकम् ॥ १ ॥

दोषनिमित्तानां तत्त्वज्ञानादहंकारनिवृत्तिः ॥ १
दोषनिमित्तं रूपादयो विषयाः संकल्पकृताः ॥ २ ॥
तन्निमित्तन्त्ववयव्यभिमानः ॥ ३ ॥ विद्याऽविद्याद्वै
विध्यात् संशयः ॥ ४ ॥ तदसंशयः पूर्वहेतुप्रसिद्धत्वा
त् ॥ ५ ॥ वृत्त्यनुपपत्तेरपि तर्हि न संशयः ॥ ६ ॥

कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः ॥ ७ ॥ तेषु चावृत्तेरवयव्यभावः ॥ ८ ॥ पृथक् चावयवेभ्यो ऽवृत्तेः ॥ ९ ॥ नचावयव्यवयवाः ॥ १० ॥ एकस्मिन् भेदाभावाद्भेदशब्दप्रयोगानुपपत्तेरप्रश्नः ॥ ११ ॥ अवयवान्तराभावेऽप्यवृत्तेरहेतुः ॥ १२ ॥ केशसमूहे तैमिरिकोपलब्धिवत्तदुपलब्धिः ॥ १३ ॥ स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद्विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः ॥ १४ ॥ अवयवावयविप्रसंगश्चैवमाप्रलयात् ॥ १५ ॥ न प्रलयोऽणुसद्भावात् ॥ १६ ॥ परं वा त्रुटेः ॥ १७ ॥ आकाशव्यतिभेदात् तदनुपपत्तिः ॥ १८ ॥ आकाशासर्वगतत्वं वा ॥ १९ ॥ अन्तर्वहिश्च कार्य्यद्रव्यस्य कारणान्तरवचनादकार्य्ये तदभावः ॥ २० ॥ सर्वसंयोगशब्दविभवाच्च सर्वगतम् ॥ २१ ॥ अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्म्माः ॥ २२ ॥ मूर्त्तिमतांच संस्थानोपपत्तेरवयवसद्भावः ॥ २३ ॥ संयोगोपपत्तेश्च ॥ २४ ॥ अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः ॥ २५ ॥ बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपक-

र्वेणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः ॥ २६ ॥ व्याहतत्वादहेतुः ॥ २७ ॥ तदाश्रयत्वादपृथग्ग्रहणम् ॥ २८ ॥ प्रमाणतश्चाऽर्थप्रतिपत्तेः ॥ २९ ॥ प्रमाणानुपपत्त्युपपत्तिभ्याम् ॥ ३० ॥ स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः ॥ ३१ ॥ मायागन्धर्वनगरमृगतृष्णिकावद्वा ॥ ३२ ॥ हेत्वभावादसिद्धिः ॥ ३३ ॥ स्मृतिसंकल्पवच्च स्वप्नविषयाभिमानः ॥ ३४ मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिबोधे ॥ ३५ ॥ बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ॥ ३६ ॥ तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः ॥ ३७ ॥ समाधिविशेषाभ्यासात् ॥ ३८ ॥ नार्थविशेषप्राबल्यात् ॥ ३९ ॥ क्षुदादिभिः प्रवर्त्तनाच्च ॥ ४० ॥ पूर्वकृतफलानुबन्धात् तदुत्पत्तिः ॥ ४१ ॥ अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः ॥ ४२ ॥ अपवर्गेऽप्येवं प्रसंगः ॥ ४३ ॥ न निष्पन्नावश्यम्भावित्वात् ॥ ४४ ॥ तदभावश्चापवर्गे ॥ ४५ ॥ तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः ॥ ४६ ॥ ज्ञानग्रहणाभ्यास-

स्तद्विद्यैश्च सह संवादः ॥ ४७ ॥ तं शिष्यगुरुस-ब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनसूयिभिरभ्युपेयात् । ॥ ४८ ॥ प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ॥ ४९ ॥ तत्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे वीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् ॥ ५० ॥

## पंचमाध्यायः

### प्रथमाह्निकम्

साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसंगप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरण-हेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्य्यसमाः ॥ १ ॥ साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्म्मविपर्य्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ ॥ २ ॥ गोत्वाद्गोसिद्धिवत् तत्सिद्धिः ॥ ३ ॥ साध्यदृष्टान्तयो-र्धर्म्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्य विकल्पसाध्यसमाः ॥ ४ ॥ किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ॥ ५ ॥ साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ॥ ६ ॥ प्राप्य साध्यमप्राप्य वा हेतोः

प्राप्य अविशिष्टत्वादप्राप्य असाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥ ७ ॥ घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारादप्रतिषेधः ॥ ८ ॥ दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसंगप्रतिदृष्टान्तसमौ ॥ ९ ॥ प्रदीपादानप्रसंगनिवृत्तिवत्तद्विनिवृत्तिः ॥ १० ॥ प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ॥ ११ प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥ १२ ॥ तथाभावादुत्पन्नस्यकारणोपपत्तेर्नकारणप्रतिषेधः ॥ ॥ १३ ॥ सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः ॥ १४ ॥ साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशयो ऽत्यन्तसंशयप्रसंगो नित्यत्वान्नाभ्युपगमाच्च सामान्यस्याप्रतिषेधः ॥ १५ ॥ उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः ॥ १६ ॥ प्रतिपक्षात् प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः ॥ १७ ॥ त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ॥ १८ ॥ न हेततः साध्यसिद्धेस्त्रैकाल्यासिद्धिः ॥ १९ ॥ प्रतिषेधानुपपत्तेः प्रतिषेद्धव्याप्रतिषेधः ॥ २० ॥ अर्थापत्तितः प्रतिपक्ष

सिद्धेरर्थापत्तिसमः ॥ २१ ॥ अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ॥ ॥ २२ ॥ एकधर्म्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसमः ॥ २३ ॥ क्वचिद्धर्म्मानुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभावः ॥ २४ ॥ उभयकारणोपपत्तेरुपपत्तिसमः ॥ २५ ॥ उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ॥ २६ ॥ निर्द्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः ॥ २७ ॥ कारणान्तरादपि तद्धर्म्मोपपत्तेरप्रतिषेधः ॥ २८ ॥ तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः ॥ २९ ॥ अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ ३० ॥ ज्ञानविकल्पानाञ्च भावाभावसंवेदनादध्यात्मम् ॥ ३१ ॥ साधर्म्यात्तुल्यधर्म्मोपपत्तेः सर्वानित्यत्वप्रसंगादनित्यसमः ॥ ३२ ॥ साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्याच्च ॥ ३३ ॥ दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात्तस्य चोभयथाभावान्नाविशेषः ॥ ३४ ॥ नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ॥ ३५ ॥ प्रतिषेध्ये नित्यमनित्यभावादनित्ये नि-

तात्त्वोपपत्तेः प्रतिषेधाभावः ॥ ३६ ॥ प्रयत्नकार्य्या नेकत्वात्कार्य्यसमः ॥ ३७ ॥ कार्य्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ॥ ३८ ॥ प्रतिषेधेऽपि समानो दोषः ॥ ३९ ॥ सर्वत्रैवम् ॥ ४० ॥ प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः ॥ ४१ ॥ प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोष प्रसंगोमतानुज्ञा ॥ ४२ ॥ स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्द्देशे परपक्षदोषाभ्युपगमात्समानो दोष इति ॥ ४३ ॥

### द्वितीयमाह्निकम्

प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्य्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ॥ १ ॥ प्रतिदृष्टान्तधर्म्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ॥ २ ॥ प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्त-

रम् ॥ ३ ॥ प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ॥ ४
पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्न्यासः ॥ ५
अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतोहेत्वन्त
रम् ॥ ६ ॥ प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम्
॥ ७ ॥ वर्णक्रमनिर्देशवन्निरर्थकम् ॥ ८ ॥ परिषत्प्र
तिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम्
॥ ९ ॥ पौर्वापर्य्यायोगादप्रतिसम्बद्धार्थमपार्थकम्
॥ १० ॥ अवयवविपर्य्यासवचनमप्राप्तकालम् ॥ ११
हीनमन्यतमेनाप्यवयवेन न्यूनम् ॥ १२ ॥ हेतूदा-
हरणाधिकमधिकम् ॥ १३ ॥ शब्दार्थयोः पुनर्वचनं
पुनरुक्तमन्यत्रानुवादात् ॥ १४ ॥ अनुवादे त्वपुनरुक्तं
शब्दाभ्यासादर्थविशेषोपपत्तेः ॥ १५ ॥ अर्थादापन्न
स्य स्वशब्देन पुनर्व्वचनम् ॥ १६ ॥ विज्ञातस्य परि-
षदा त्रिरभिहितस्याप्यनुच्चारणमननुभाषणम् ॥ १७
अविज्ञातञ्चाज्ञानम् ॥ १८ ॥ उत्तरस्याप्रतिपत्तिर-
प्रतिभा ॥ १९ ॥ कार्य्यव्यासंगात् कथाविच्छेदो
विक्षेपः ॥ २० ॥ स्वपक्षदोषाभ्युपगमात् परपक्षदोष
प्रसंगो मतानुज्ञा ॥ २१ ॥ निग्रहस्थानप्राप्तस्या

निग्रहः पर्य्यनुयोज्योपेक्षणम् ॥ २२ ॥ अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ॥ २३ ॥ सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसंगो ऽपसिद्धान्तः ॥ २४ ॥ हेत्वाभासाश्च यथोक्ताः ॥ २५ ॥

॥ इति ॥

ओं

# योग दर्शनम्

महामुनि पतञ्जलि विरचितम्

सूत्रम्

लवपुरे

विरजानन्द यन्त्रालये

मुद्रितम्

मूल्य ।)    डाक व्यय )॥

योगदर्शनसूचीपत्रम्

| पादः | सूत्रसंख्या | पृष्ठतः पृष्ठपर्यन्तम् |
| --- | --- | --- |
| १. समाधिपादः | ५१ | १६५ - १६८ |
| २. साधनपादः | ५५ | १६८ - २०० |
| ३. विभूतिपादः | ५५ | २०० - २०३ |
| ४. कैवल्यपादः | ३४ | २०३ - २०५ |
| योगः | १९५ | ११ पृष्ठानि |

क्रियापदम् — दीयते, २, ५२
नाति ३, २८
स्यात् ४, १६

कैवल्यपदम्

## अथ समाधि पादः

अथ योगानुशासनम् ॥ १ ॥ योगश्चित्तवृत्ति-निरोधः ॥ २ ॥ तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥ वृत्तिसारूप्यमितरत्र ॥ ४ ॥ वृत्तयः पंचतय्यः क्लिष्टाऽक्लिष्टाः ॥ ५ ॥ प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ॥ ६ ॥ प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥ विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ ८ ॥ शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥ अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥ अनुभूतविषयाऽसंप्रमोषः स्मृतिः ॥ ११ ॥ अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥ तत्रस्थितौ यत्नोऽभ्यासः ॥ १३ ॥ स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः ॥ १४ ॥ दृष्टाऽनुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥ तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥ वितर्कविचारानन्दाऽस्मितारूपानुगमात्सम्प्रज्ञातः ॥ १७ ॥ विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः

॥ १८ ॥ भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥ श्रद्धावीर्य्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥ २० ॥ तीव्रसंवेगानामासन्नः ॥ २१ ॥ मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ॥ २२ ॥ ईश्वरप्रणिधानाद्वा ॥ २३ ॥ क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ २४ ॥ तत्र निरतिशयं सर्वज्ञबीजम् ॥ २५ ॥ स एषपूर्वेषामपि गुरुःकालेनानवच्छेदात् ॥ २६ ॥ तस्य वाचकः प्रणवः ॥ २७ ॥ तज्जपस्तदर्थभावनम् ॥ २८ ॥ ततः प्रत्यक्चेतनाधिगमोऽप्यंतरायाभावश्च ॥ २९ ॥ व्याधिस्त्यानसंशयप्रमादाऽलस्याऽविरतिभ्रांतिदर्शनालब्धभूमिकत्वानवस्थितत्वानिचित्तविक्षेपास्तेऽन्तरायाः ॥ ३० ॥ दुःखदौर्मनस्यांगमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥ ३१ ॥ तत्प्रतिषेधार्थमेकतत्वाभ्यासः ॥ ३२ ॥ मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणांभावनातश्चित्तप्रसादनं ॥ ३३ ॥ प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ ३४ ॥ विषयवती वा प्रवृत्तिरुत्पन्नामनसःस्थितिनिबंधनी ॥ ३५ ॥ विशोकावाज्योतिष्मती ॥ ३६ ॥ वीतरागविषयं वाचित्तं ॥ ३७ स्वप्ननिद्राज्ञानालंबनं वा ॥ ३८ ॥ यथाभिमतध्यानाद्वा

॥ ३९ ॥ परमाणुपरममहत्त्वांतोऽस्य वशीकारः ॥ ४० क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदंजनतासमापत्तिः ॥ ४१ ॥ तत्र शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का समापत्तिः ॥ ४२ ॥ स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥ ४३ एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ ४४ ॥ सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् ॥ ४५ ॥ ता एव सबीजः समाधिः ॥ ४६ ॥ निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥ ४७ ॥ ऋतम्भरा तत्र प्रज्ञा ॥ ४८ ॥ श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ॥ ४९ ॥ तज्जः संस्कारोऽन्यसंस्कारप्रतिबंधी ॥ ५० ॥ तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ॥ ५१ ॥

---

## अथ साधनपादः

---

तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥ १ समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ २ ॥ अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशाः

॥ ३ ॥ अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नो-
दाराणाम् ॥ ४ ॥ अनित्याशुचिदुःखानात्मसु नित्य-
शुचिसुखात्मख्यातिरविद्या ॥ ५ ॥ दृग्दर्शनशक्त्यो-
रेकात्मतेवास्मिता ॥ ६ ॥ सुखानुशयीरागः ॥ ७ ॥
दुःखानुशयीद्वेषः ॥ ८ ॥ स्वरसवाहीविदुषोऽपि
तथारूढोऽभिनिवेशः ॥ ९ ॥ तेप्रतिप्रसवहेयाःसूक्ष्माः
॥ १० ॥ ध्यानहेयास्तद्वृत्तयः ॥ ११ ॥ क्लेशमूलः
कर्माशयो दृष्टादृष्टजन्मवेदनीयः ॥ १२ ॥ सतिमूले
तद्विपाको जात्यायुर्भोगाः ॥ १३ ॥ ते ह्लादपरिताप-
फलाः पुण्यापुण्यहेतुत्वात् ॥ १४ ॥ परिणामतापसं-
स्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः
॥ १५ ॥ हेयं दुःखमनागतम् ॥ १६ ॥ द्रष्टृदृश्ययोः
संयोगो हेयहेतुः ॥ १७ ॥ प्रकाशक्रियास्थितिशील-
म्भूतेन्द्रियात्मकम्भोगापवर्गार्थंदृश्यम् ॥ १८ ॥ विशे-
षाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ॥ १९ ॥
द्रष्टादृशिमात्रःशुद्धोपि प्रत्ययानुपश्यः ॥ २० ॥ तदर्थ
एव दृश्यस्यात्मा ॥ २१ ॥ कृतार्थम्प्रति नष्टमप्यनष्ट-
न्तदन्यसाधारणत्वात् ॥ २२ ॥ स्वस्वामिशक्त्योः
स्वरूपोपलब्धिहेतुः संयोगः ॥ २३ ॥ तस्यहेतुरविद्या
॥ २४ ॥ तदभावात्संयोगाभावो हानन्तद् दृशेःकैव-

त्यम् ॥ २५ ॥ विवेकख्यातिरविप्लवा हानोपायः ॥ २६ ॥ तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥ २७ ॥ योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः २८ ॥ यमनियमासनप्राणायामप्रत्याहारधारणाध्यान समाधयोऽष्टावङ्गानि ॥ २९ ॥ अहिंसासत्यास्तेय-ब्रह्मचर्यापरिग्रहा यमाः ॥ ३० ॥ जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् ॥ ३१ ॥ शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥ ३२ ॥ वितर्कबाधने प्रतिपक्षभावनम् ॥ ३३ ॥ वितर्का हिंसादयः कृतकारितानुमोदिता लोभ-क्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्त-फला इति प्रतिपक्षभावनम् ॥ ३४ ॥ अहिंसा-प्रतिष्ठायां तत्सन्निधौ वैरत्यागः ॥ ३५ ॥ सत्यप्रति-ष्ठायां क्रियाफलाश्रयत्वम् ॥ ३६ ॥ अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ॥ ३७ ॥ ब्रह्मचर्यप्रतिष्ठायां वीर्य-लाभः ॥ ३८ ॥ अपरिग्रहस्थैर्ये जन्मकथन्तासं-बोधः ॥ ३९ ॥ शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः ॥ ४० ॥ सत्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्श-नयोग्यत्वानि च ॥ ४१ ॥ सन्तोषादनुत्तमसुखलाभः ॥ ४२ ॥ कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ॥ ४३ ॥

स्वाध्यायादिष्टदेवतासम्प्रयोगः ॥ ४४ ॥ समाधिसिद्धिरीश्वरप्रणिधानात् ॥ ४५ ॥ स्थिरसुखमासनम् ॥ ४६ ॥ प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ॥ ४७ ॥ ततोद्वन्द्वानभिघातः ॥ ४८ ॥ तस्मिन् सति श्वासप्रश्वासयोर्गति विच्छेदः प्राणायामः ॥ ४९ ॥ स तु वाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः ॥ ५० ॥ वाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ॥ ५१ ॥ ततः क्षीयते प्रकाशावरणम् ॥ ५२ ॥ धारणासु च योग्यता मनसः ॥ ५३ ॥ स्वविषयासम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणाम्प्रत्याहारः ॥ ५४ ॥ ततः परमावश्यतेन्द्रियाणाम् ॥ ५५ ॥

---

## अथ विभूति पादः

—:*:—

देशबन्धश्चित्तस्यधारणा ॥ १ ॥ तत्रप्रत्ययैकतानता ध्यानम् ॥ २ ॥ तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥ ३ ॥ त्रयमेकत्र संयमः ॥ ४ ॥ तज्जयात्प्रज्ञालोकः ॥ ५ ॥ तस्यभूमिषु विनियोगः

॥ ६ ॥ त्रयमन्तरङ्गम्पूर्वेभ्यः ॥ ७ ॥ तदपि बहिरङ्गन्निर्बीजस्य ॥ ८ ॥ व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ॥ ९ ॥ तस्य प्रशान्तवाहिता संस्कारात् ॥ १० ॥ सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्यसमाधिपरिणामः ॥ ११ ॥ शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः ॥ १२ ॥ एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः ॥ १३ ॥ शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ॥ १४ ॥ क्रमान्यत्वम्परिणामान्यत्वे हेतुः ॥ १५ ॥ परिणामत्रयसंयमादतीतानागतज्ञानम् ॥ १६ ॥ शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम् ॥ १७ ॥ संस्कारसाक्षात्करणात्पूर्वजातिज्ञानं १८ ॥ प्रत्ययस्य परचित्तज्ञानम् ॥ १९ ॥ न च तत्सालम्बनंतस्याविषयीभूतत्वात् ॥ २० ॥ कायरूपसंयमात्तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशासम्प्रयोगेऽन्तर्द्धानम् ॥ २१ ॥ सोपक्रमन्निरुपक्रमञ्च कर्मतत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा ॥ २२ ॥ मैत्र्यादिषु बलानि ॥ २३ ॥ बलेषुहस्तिबलादीनि ॥ २४ ॥ प्रवृत्त्यालोकन्यासात्सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् ॥

२५ ॥ भुवनज्ञानं सूर्ये संयमात् ॥ २६ ॥ चन्द्रे तारा व्यूहज्ञानम् ॥ २७ ॥ ध्रुवे तद्गतिज्ञानम् ॥ २८ ॥ नाभिचक्रे कायव्यूहज्ञानम् ॥ २९ ॥ कंठकूपे क्षुत्पिपासानिवृत्तिः ॥ ३० ॥ कूर्मनाड्यां स्थैर्यम् ॥ ३१ ॥ मूर्द्धज्योतिषि सिद्धदर्शनम् ॥ ३२ ॥ प्रातिभाद्वा सर्वम् ॥ ३३ ॥ हृदये चित्तसम्वित् ॥ ३४ ॥ सत्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषोभोगः परार्थत्वात् स्वार्थसंयमात्पुरुषज्ञानम् ॥ ३५ ॥ ततः प्रातिभश्रावणवेदनादर्शास्वादवार्त्ता जायन्ते ॥ ३६ ॥ ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ ३७ ॥ वन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥ ३८ ॥ उदानजयाज्जलपंककंटकादिष्वसंग उत्क्रांतिश्च ॥ ३९ ॥ समानजयाज्ज्वलनम् ॥ ४० ॥ श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम् ॥ ४१ ॥ कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् ॥ ४२ ॥ वहिरकल्पितावृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ॥ ४३ ॥ स्थूलस्वरूपसूक्ष्मान्वयार्थवत्वसंयमाद्भूतजयः ॥ ४४ ॥ ततोणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च ॥ ४५ ॥ रूपलावण्यवलवज्रसंहननत्वानि कायसंपत् ॥ ४६

ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः ॥ ४७ ॥ ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥ ४८ ॥ सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च ॥ ४९ ॥ तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥ ५० ॥ स्थान्युपनिमन्त्रणे संगस्मयाकरणं पुनरनिष्टप्रसंगात् ॥ ५१ ॥ क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥ ५२ ॥ जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः ॥ ५३ ॥ तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम् ॥ ५४ ॥ सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम् ॥ ५५ ॥

---

## अथ कैवल्यपादः

---

जन्मौषधिमंत्रतपःसमाधिजाः सिद्धयः ॥ १ ॥ जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ २ ॥ निमित्तमप्रयोजकम्प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥ निर्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥ प्रवृ-

त्तिभेदे प्रयोजकंचित्तमेकमनेकेषाम् ॥ ५ ॥ तत्र
ध्यानजमनाशयम् ॥ ६ ॥ कर्माशुक्लाकृष्णं योगिन-
स्त्रिविधमितरेषाम् ॥ ७ ॥ ततस्तद्विपाकानुगुणाना-
मेवाभिव्यक्तिर्वासनानाम् ॥ ८ ॥ जातिदेशकालव्य-
वहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात्
॥ ९ ॥ तासामनादित्वं चाशिषो नित्यत्वात् ॥ १०
हेतुफलाश्रयालंबनैः संगृहीतत्वादेषामभावे तद-
भावः ॥ ११ ॥ अतीतानागतं स्वरूपतो ऽस्त्यध्वभे-
दाद्धर्माणां ॥ १२ ॥ ते व्यक्तसूक्ष्मा गुणात्मानः ॥ १३
परिणामैकत्वाद्वस्तुतत्वम् ॥ १४ ॥ वस्तुसाम्ये चित्त-
भेदात्तयोर्विभक्तः पंथाः ॥ १५ नचैकचित्ततन्त्रं वस्तु
तदप्रमाणकं तदा किं स्यात् ॥ १६ ॥ तदुपरागा-
पेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥ १७ ॥ सदा-
ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात्
॥ १८ ॥ न तत् स्वाभासं दृश्यत्वात् ॥ १९ ॥ एक-
समये चोभयानवधारणम् ॥ २० ॥ चित्तान्तरदृश्ये
बुद्धेरतिप्रसंगः स्मृतिसंकरश्च ॥ २१ ॥ चितेरप्रति-
संक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ २२ ॥
द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ २३ ॥ तदसंख्ये-

यवासनाभिश्चित्तमपि परार्थं संहत्यकारित्वात् ॥ २४
विशेषदर्शिन आत्मभावभावनानिवृत्तिः ॥ २५ ॥
तदा विवेकनिम्नङ्कैवल्यप्राग्भारं चित्तम् ॥ २६ ॥
तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७ ॥
हानमेषां क्लेशवदुक्तम् ॥ २८ ॥ प्रसंख्यानेऽप्यकु-
सीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ॥ २९
ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥ तदा सर्वावरणम-
लापेतस्य ज्ञानस्यानन्त्यात् ज्ञेयमल्पम् ॥ ३१ ॥ ततः
कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३२ ॥
क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥ ३३
पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूप-
प्रतिष्ठा वा चितिशक्तिरिति ॥ ३४ ॥

॥ इति ॥

II



अथ महामुद्रा -

पादमूलेन वामेन योनिं संपीड्य दक्षिणं।
प्रसारितं पदं कृत्वा कराभ्यां धारयेद् दृढं ॥२

कंठे बंधं समारोप्य धारयेद्वायुमूर्ध्वतः।
यथा दंडहतः सर्पो दंडाकारः प्रजायते ॥२१

ऋज्वीभूता तथा शक्तिः कुंडली सहसा भवेत्।
तदा सा मरणावस्था जायते द्विपुटाश्रया ॥२२॥

ततः शनैः शनैरेव रेचयेन्नैव वेगतः।
महामुद्रां च तेनैव वदंति विबुधोत्तमाः
इयं खलु महामुद्रा महासिद्धैः प्रदर्शिता ॥२३॥

महाक्लेशादयो दोषाः क्षीयंते मरणादयः।
महामुद्रां च तेनैव वदंति विबुधोत्तमाः ॥२४

चंद्रांगे तु समभ्यस्य सूर्यांगे पुनरभ्यसेत्।
यावत्तुल्या भवेत्संख्या ततो मुद्रां विसर्जयेत्
॥२५॥

नहि पथ्यमपथ्यं वा रसाः सर्वेऽपि नीरसाः।
अपि भुक्तं विषं घोरं पीयूषमपि जीर्यति ॥२६॥

क्षयकुष्ठगुदावर्तगुल्माजीर्णपुरोगमाः।
तस्य दोषाः क्षयं यान्ति महामुद्रां तु योऽभ्यसेत्
॥२७

कथितेयं महामुद्रा महासिद्धिकरा नृणाम्
गोपनीया प्रयत्नेन न देया यस्य कस्यचित् ॥२८

२०६



ओ३म्

# वेदान्तदर्शनम्

महामुनि व्यास विरचितम्

सूत्रम्

लवपुरे

विरजानन्द यन्त्रालये

मुद्रितम्

मूल्य ≶)  डाक व्यय )॥

ओ३म्

# वेदांत दर्शनम्

## प्रथमाध्याय:

### प्रथमपाद:

अथातो ब्रह्मजिज्ञासा ॥ १ ॥ जन्माद्यस्ययत: इति ॥ २ ॥ शास्त्रयोनित्वात् इति ॥ ३ ॥ तत्तु समन्वयात् ॥ ४ ॥ ईक्षतेर्नाशब्दम् ॥ ५ ॥ गौणश्चे न्नात्मशब्दात् ॥ ६ ॥ तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ हेयत्वावचनाच्च ॥ ८ ॥ स्वाप्ययात् ॥ ९ ॥ गतिसा-मान्यात् ॥ १० ॥ श्रुतत्वाच्च ॥ ११ ॥ आनन्दमयो-ऽभ्यासात् ॥ १२ ॥ विकारशब्दान्नेति चेन्न प्राचु-र्य्यात् ॥ १३ ॥ तद्धेतुव्यपदेशाच्च ॥ १४ ॥ मान्त्र वर्णिकमेव च गीयते ॥ १५ ॥ नेतरोऽनुपपत्तेः ॥ १६ ॥ भेदव्यपदेशाच्च ॥ १७ ॥ कामाच्च नानु-मानापेक्षा ॥ १८ ॥ अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥ अन्तस्तधर्मोपदेशात् ॥ २० ॥ भेदव्यपदे-शाच्चान्य: ॥ २१ ॥ आकाशस्तल्लिङ्गात् ॥ २२ ॥ अत एव प्राण: ॥ २३ ॥ ज्योतिश्चरणाभिधानात् ॥ २४ ॥

छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॥ २५ ॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥ प्राणस्तथानुगमात् ॥ २८ ॥ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ २९ ॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० जीव मुख्यप्राणलिङ्गान्नेति चेन्नोपासनात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥

## द्वितीयपादः

सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥ विवक्षितगुणोपपत्तेश्च ॥ २ ॥ अनुपपत्तेस्तु न शरीरः ॥ ३ ॥ कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥ शब्दविशेषात् ॥ ५ ॥ स्मृतेश्च ॥ ६ ॥ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥ अत्ता चराचर ग्रहणात् ॥ ९ ॥ प्रकरणाच्च ॥ १० ॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥ विशेषणाच्च ॥ १२ ॥ अन्तर उपपत्तेः ॥ १३ ॥ स्थानादिव्यपदेशाच्च ॥ १४

सुख विशिष्टाभिधानादेव च ॥ १५ ॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥ अनवस्थितेरसम्भवाच्च नेतरः ॥ १७ ॥ अन्तर्याम्यधिदेवादिषु तद्धर्म्मव्यपदेशात् ॥ १८ ॥ न च स्मार्त्तमतद्धर्म्माभिलाषात् ॥ १९ ॥ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥ अदृश्यत्वादिगुणको धर्म्मोक्तेः ॥ २१ ॥ विशेषण भेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥ रूपोपन्यासाच्च ॥ २३ ॥ वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥ स्मर्य्यमाणमनुमानं स्यादिति ॥ २५ शब्दादिभ्योऽन्तः प्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते ॥ २६ ॥ अत एव न देवता भूतञ्च ॥ २७ ॥ साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥ अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥ अनुस्मृतेर्बादरिः ॥ ३० ॥ सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ ३१ ॥ आमनन्ति चैनमस्मिन् ॥ ३२ ॥

### तृतीयपादः

द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥ मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥ नानुमानमतच्छब्दात् ॥ ३ ॥

प्रागाभृञ्च ॥ ४ ॥ भेदव्यपदेशात् ॥ ५ ॥ प्रकरणात् ॥ ६ ॥ स्थित्यदनाभ्यांच ॥ ७ ॥ भूमा सम्प्रसादा-दध्युपदेशात् ॥ ८ ॥ धर्म्मोपपत्तेश्च ॥ ९ ॥ अक्षर मम्बरान्तधृतेः ॥ १० ॥ सा च प्रशासनात् ॥ ११ ॥ अन्यभावव्यावृत्तेश्च ॥ १२ ॥ ईक्षतिकर्मव्यपदेशात् सः ॥ १३ ॥ दहर उत्तरेभ्यः ॥ १४ ॥ गतिशब्दा-भ्यां तथाहि दृष्टं लिंगञ्च ॥ १५ ॥ धृतेश्च महिम्नो ऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥ प्रसिद्धेश्च ॥ १७ ॥ इत रपरामर्शात् स इति चेन्नासम्भवात् ॥ १८ ॥ उत्त राच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥ अन्यार्थश्च परामर्शः ॥ २० ॥ अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥ अनु कृतेस्तस्य च ॥ २२ ॥ अपि च स्मर्य्यते ॥ २३ ॥ शब्दादेव प्रमितः ॥ २४ ॥ हृद्यपेक्षया तु मनुष्याधि कारत्वात् ॥ २५ ॥ तदुर्य्यपि वादरायणः संभवात् ॥ २६ ॥ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्द-र्शनात् ॥ २७ ॥ शब्द इति चेन्नातः प्रभवात् प्रत्य-क्षानुमानाभ्यम् ॥ २८ ॥ अत एव च नित्यत्वम् ॥ २९ ॥ समाननामरूपत्वा च्चावृत्तावप्य विरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥ मध्वादिष्वसम्भवादनधि-

कारः जैमिनिः ॥ ३१ ॥ ज्योतिषिभावाच्च ॥ ३२ ॥ भावात्तु वादरायणो ऽस्ति हि ॥ ३३ ॥ शुगस्य तद-नादर श्रवणात् तदाद्रवणात् सूच्यते हि ॥ ३४ ॥ क्षत्रियत्वावगतेश्चोत्तरोत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥ संस्कारपरामर्शात् तदभावनिर्द्धारणे च प्रवृत्तेः ॥ ३७ श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥ कम्प-नात् ॥ ३९ ॥ ज्योतिर्दर्शनात् ॥ ४० ॥ आकाशो-ऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥ सुषुप्त्युत्क्रान्त्यो-र्भेदेन ॥ ४२ ॥ पत्यादिशब्देभ्यः ॥ ४२ ॥

चतुर्थपादः

आनुमानिकमप्येकेषामिति चेन्न शरीररूपकवि-न्यस्त गृहीतेर्दर्शयति च ॥ १ ॥ सूक्ष्मन्तु तदर्ह-त्वात् ॥ २ ॥ तदधीनत्वादर्थवत् ॥ ३ ॥ ज्ञेयत्व-वचनाच्च ॥ ४ ॥ वदतीति चेन्नप्राज्ञो हि ॥ ५ ॥ प्रकरणात् ॥ ६ ॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ७ ॥ महद्वच्च ॥ ८ ॥ चमसवदविशेषात् ॥ ९ ॥ ज्योतिरुपक्रमात् तु तथा ह्यधीयत एके ॥ १० ॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ ११ ॥ न सङ्ख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ १२ ॥

प्राणादयो वाक्यशेषात् ॥ १३ ॥ ज्योतिषैकेषाम-सत्यन्ने ॥ १४ ॥ कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तः ॥ १५ ॥ समाकर्षात् ॥ १६ ॥ जगद्वाचित्वात् ॥ १७ ॥ जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १८ ॥ अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १९ ॥ वाक्यान्वयात् ॥ २० ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २१ ॥ उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ॥ २२ ॥ अवस्थितेरिति काशकृत्स्नः ॥ २३ ॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २४ ॥ अभिध्योपदेशाच्च ॥ २५ साक्षाच्चोभयाम्नानात् ॥ २६ ॥ आत्मकृतेः परिणामात् ॥ २७ ॥ योनिश्च हि गीयते ॥ २८ ॥ एतेन सर्वे व्याख्याताः ॥ २९ ॥

## द्वितीयाध्यायः

### प्रथमपादः

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥ इतरेषाञ्चानुपलब्धेः २ एतेन योगः प्रत्युक्तः ॥ ३ ॥ न विलक्षणत्वादस्य

तथात्वञ्च शब्दात् ॥ ४ ॥ अभिमानिव्यपदेशस्तु विशे षानुगतिभ्यां ॥ ५ ॥ दृश्यते तु ॥ ६ ॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥ अपीतौ तद्वत् प्रसङ्गा दसमञ्जसम् ॥ ८ ॥ न तु दृष्टान्तभावात् ॥ ९ ॥ स्वपक्षदोषाच्च ॥ १० ॥ तर्काप्रतिष्ठानादप्यन्यथानु मेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ ११ ॥ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥ भोक्ताप त्तेरविभागश्चेत स्याल्लोकवत् ॥ १३ ॥ तदनन्यत्व मारंभणशब्दादिभ्यः ॥ १४ ॥ भावे चोपलब्धेः ॥ १५ सत्वाच्चावरस्य ॥ १६ ॥ असद्व्यपदेशान्नेति चेन्न धर्म्मान्तरेण वाक्यशेषात् ॥ १७ ॥ युक्तेः शब्दान्तराच्च ॥ १८ ॥ पटवच्च ॥ १९ ॥ यथा च प्राणादि ॥ २० इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥ अधि- कन्तु भेदनिर्द्देशात् ॥ २२ ॥ अश्मादिवच्च तद नुपपत्तिः ॥ २३ ॥ उपसंहारदर्शनान्नेति चेन्न क्षीर वद्धि ॥ २४ ॥ देवादिवदपि लोके ॥ २५ ॥ कृत्स्न प्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥ श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥ आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥ स्वपक्ष दोषाच्च ॥ २९ ॥ सर्वोपेता

च तद्दर्शनात् ॥ ३० ॥ विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥ न प्रयोजनत्वात् ॥ ३२ ॥ लोकवत्तु लीला कैवल्यम् ॥ ३३ ॥ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॥ ३४ ॥ न कर्मविभागादिति चेन्नाऽनादित्वात् ॥ ३५ ॥ उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥ सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

द्वितीयपादः

रचनानुपपत्तेश्चानुमानम् ॥ १ ॥ प्रवृत्तेश्च ॥ २ ॥ पयोऽम्बुवच्चेत्तत्रापि ॥ ३ ॥ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥ अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥ अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥ पुरुषाश्मवदिति चेत् तथापि ॥ ७ ॥ अङ्गित्वानुपपत्तेश्च ॥ ८ ॥ अन्यथानुमितौ च ज्ञशक्ति वियोगात् ॥ ९ ॥ विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥ उभयथापि न कर्मातस्तदभावः ॥ १२ ॥ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥ नित्यमेव च भावात् ॥ १४ ॥ रूपादिमत्वाच्च विपर्य्ययो दर्शनात् ॥ १५ उभयथा चदोषात् ॥ १६ ॥ अपरिग्रहाच्चात्यन्तमन

पेचा ॥ १७ ॥ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्त्वात् ॥ १९ ॥ उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥ प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥ उभयथा च दोषात् ॥ २३ ॥ आकाशे चाविशेषात् ॥ २४ ॥ अनुस्मृतेश्च ॥ २५ ॥ नासतोऽदृष्टत्वात् ॥ २६ ॥ उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥ नाभाव उपलब्धेः ॥ २८ ॥ वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥ न भावो ऽनुपलब्धेः ॥ ३० ॥ क्षणिकत्वाच्च ॥ ३१ ॥ नैकस्मिन्नसम्भवात् ॥ ३२ ॥ एवञ्चात्मा ऽकार्त्स्न्यम् ॥ ३३ ॥ न च पर्य्यायादप्य विरोधो विकारादिभ्यः ॥ ३४ ॥ अन्त्यावस्थितेश्चो भयनित्यत्वादविशेषः ॥ ३५ ॥ पत्युरसामञ्जस्यात् ॥ ३६ ॥ सम्बन्धानुपपत्तेश्च ॥ ३७ ॥ अधिष्ठानानुपपत्तेश्च ॥ ३८ ॥ करणवच्चेन्न भोगादिभ्यः ॥ ३९ ॥ अन्तवत्त्वमसर्वज्ञता वा ॥ ४० ॥ उत्पत्त्यसम्भवात् ॥ ४१ ॥ न च कर्त्तुः करणम् ॥ ४२ ॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४३ ॥ विप्रतिषेधाच्च ॥ ४४

तृतीयपादः

न वियदश्रुतेः ॥ १ ॥ अस्ति तु ॥ २ ॥ गौण्य सम्भवात् ॥ ३ ॥ शब्दाच्च ॥ ४ ॥ स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥ प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥ यावद्विकारन्तु विभागो लोकवत् ७ एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥ असम्भवस्तु सतोऽनुपपत्तेः ॥ ९ ॥ तेजोऽतस्तथाह्याह ॥ १० ॥ आपः ॥ ११ ॥ पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥ तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ १३ ॥ विपर्य्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥ अंतरा विज्ञानमनसी क्रमेण तल्लिङ्गादितिचेन्नाविशेषात् ॥ १५ ॥ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् १६ नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥ ज्ञोऽतएव ॥ १८ ॥ उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥ स्वात्मना चोत्तरयोः ॥ २० ॥ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥ स्वशब्दोन्मानाभ्याञ्च ॥ २२ ॥ अविरोधश्चन्दनवत् ॥ २३ ॥ अवस्थितिवैशेष्यादितिचेन्नाभ्युपगमाद्धृदिहि ॥ २४ ॥ गुणाद्वालोकवत् ॥ २५ व्यतिरेको गन्धवत् ॥ २६ ॥ तथा च दर्शयति

॥ २७॥ पृथगुपदेशात् ॥ २८॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमोवाऽन्यथा ॥ ३२ ॥ कर्त्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥ विहारोपदेशात् ॥ ३४ ॥ उपादानात् ॥ ३५ ॥ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्य्ययः ॥ ३६ ॥ उपलब्धिवदनियमः ॥ ३७ ॥ शक्तिविपर्य्ययात् ॥ ३८ ॥ समाध्यभावाच्च ॥ ३९ ॥ यथा च तक्षोभयथा ॥ ४० ॥ परात्तु तच्छ्रुतेः ४१ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ४२ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥ मन्त्रवर्णाच्च ॥ ४४ ॥ अपि च स्मर्य्यते ॥ ४५ ॥ प्रकाशादिवन्नैवं परः ॥ ४६ ॥ स्मरन्ति च ॥ ४७ ॥ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ४८ ॥ असन्ततेश्चाव्यतिकारः ॥ ४९ आभास एव च ॥ ५० ॥ अदृष्टानियमात् ॥ ५१ ॥ अभिसन्ध्यादिष्वपि चैवम् ॥ ५२ ॥ प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥

चतुर्थपादः

तथा प्राणाः ॥ १ ॥ गौण्यसम्भवात् ॥ २ ॥ प्रतिज्ञानुपरोधाच्च ॥ ३ ॥ तत्प्राक्श्रुतेश्च ॥ ४ ॥ तत्पूर्वकत्वाद्वाचः ॥ ५ ॥ सप्तगतेर्विशेषितत्वाच्च ॥ ६ ॥ हस्तादयस्तु स्थितेऽतो नैवम् ॥ ७ ॥ अणवश्च ॥ ८ श्रेष्ठश्च ॥ ९ ॥ न वायुक्रिये पृथगुपदेशात् ॥ १० ॥ चक्षुरादिवत्तु तत्सह शिष्ट्यादिभ्यः ॥ ११ ॥ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ १२ ॥ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १३ ॥ अणुश्च ॥ १४ ॥ ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १५ ॥ प्राणवता शब्दात् ॥ १६ ॥ तस्य च नित्यत्वात् ॥ १७ ॥ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १८ ॥ भेदश्रुतेः ॥ १९ ॥ वैलक्षण्याच्च ॥ २० ॥ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत् कुर्वत उपदेशात् ॥ २१ ॥ मांसादि भौमं यथा शब्दमितरयोश्च ॥ २२ ॥ वैशेष्यात्तु तद्वादस्तद्वादः ॥ २३ ॥

तृतीयाध्यायः

प्रथमपादः

तदन्तर प्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

प्राणगतेश्च ॥ ३ ॥ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥ अश्रुतत्वादिति चेन्नेष्टादि कारिणां प्रतीतेः ॥ ६ ॥ भाक्तं वाऽनात्मवित्त्वात्तथाहि दर्शयति ॥ ७ ॥ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां ८ यथेतमनेवं च ॥ ९ ॥ करणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ १० ॥ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ ११ ॥ सुकृतदुष्कृते एवेति तु बादरिः ॥ १२ ॥ अनिष्टादिकारिणामपि च श्रुतम् ॥ १३ ॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १४ ॥ स्मरन्ति च ॥ १५ ॥ अपि च सप्त ॥ १६ ॥ तत्रापि च तद्व्यापारादविरोधः ॥ १७ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १८ ॥ न तृतीये तथोपलब्धेः ॥ १९ ॥ स्मर्य्यतेऽपि च लोके ॥ २० दर्शनाच्च ॥ २१ तृतीयशब्दावरोधः संशोकजस्य ॥ २२ ॥ स्वाभाव्यापत्तिरुपपत्तेः ॥ २३ ॥ नातिचिरेण विशेषात् ॥ २४ ॥ अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २५ ॥ अशुद्धमिति चेन्न शब्दात् ॥ २६ ॥ रेतः सिग्योगोऽथ ॥ २७ ॥ योनेः शरीरम् ॥ २८ ॥

द्वितीयपादः

सन्ध्ये सृष्टिराह हि ॥ १ ॥ निर्म्मातारञ्चैके पुत्रा-दयश्च ॥ २ ॥ मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्ध-विपर्ययौ ॥ ५ ॥ देहयोगाद्वा सोऽपि ॥ ६ ॥ तदभावो नाड़ीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥ अतः प्रबोधोऽस्मात् ॥ ८ ॥ स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥ मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥ १० ॥ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥ अपि-चैवमेके ॥ १३ ॥ अरूपवदेव हि तत् प्रधानत्वात् ॥ १४ ॥ प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥ आह च तन्मात्रम् ॥ १६ ॥ दर्शयति चाथो अपि स्मर्य्यते ॥ १७ ॥ अतएव चोपमा सूर्य्यकादिवत् ॥ १८ ॥ अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥ वृद्धिह्रास-भाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥ दर्श-नाच्च ॥ २१ ॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥ तदव्यक्तमाह हि ॥ २३ ॥

अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥ प्रका- शादिवच्चावैशेष्यम् ॥ २५ ॥ प्रकाशश्च कर्मण्यभ्या सात् ॥ २६ ॥ अतो ऽनन्तेन तथा हि लिङ्गम् ॥ २७ उभयव्यपदेशात्तु हि कुण्डलवत् ॥ २८ ॥ प्रकाशाश्र यवद्वा तेजस्त्वात् ॥ २९ ॥ पूर्ववद्वा ॥ ३० ॥ प्रति षेधाच्च ॥ ३१ ॥ परमतः सेतून्मानसम्बन्धभेदव्यपदे शेभ्यः ॥ ३२ ॥ सामान्यात्तु ॥ ३३ ॥ बुद्ध्यर्थः पाद वत् ॥ ३४ ॥ स्थानविशेषात् ॥ ३५ ॥ उपपत्तेश्च ॥ ३६ ॥ तथान्यप्रतिषेधात् ॥ ३७ ॥ अनेन सर्वग तत्वमायामशब्दादिभ्यः ॥ ३८ ॥ फलमतउपपत्ते ॥ ३९ ॥ श्रुतत्वाच्च ॥ ४० ॥ धर्मं जैमिनिरतएव ॥ ४१ ॥ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४२

तृतीयपादः

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥ भेदा न्नेति चेन्नैकस्यामपि ॥ २ ॥ स्वाध्यायस्य तथा त्वे न हि समाचारे ऽधिकाराच्च ॥ ३ ॥ सलिलवच्च तन्नि यमः ॥ ४ ॥ दर्शयति च ॥ ५ ॥ उपसंहारोऽर्थाभेदा द्विधिशेषवत् समाने च ॥ ६ ॥ अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ७ ॥ नवा प्रकरणभेदात् परोवरी

यस्त्वादिवत् ॥ ८ ॥ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ९ ॥ व्याप्तेश्च समञ्जसम् ॥ १० ॥ सर्वाभेदादन्यत्रेमे ॥ ११ ॥ आनन्दादयः प्रधानस्य ॥ १२ ॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १३ ॥ इतरेत्वर्थसामान्यात् ॥ १४ ॥ आध्यानाय प्रयोजनाभावात् ॥ १५ ॥ आत्मशब्दाच्च ॥ १६ ॥ आत्मगृहीतिरितरवदुत्तरात् ॥ १७ ॥ अन्वयादिति चेत् स्यादवधारणात् ॥ १८ ॥ कार्य्याख्यानादपूर्वम् १९ समान एवञ्चाभेदात् ॥ २० ॥ सम्बन्धादेवमन्यत्रापि ॥ २१ ॥ न वा विशेषात् ॥ २२ ॥ दर्शयति च ॥ २३ ॥ सम्भृतिद्युव्याप्त्यपि चातः ॥ २४ ॥ पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २५ ॥ वेधाद्यर्थभेदात् ॥ २६ ॥ हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगानवत्तदुक्तम् ॥ २७ ॥ साम्पराये तर्त्तव्याभावात् तथा ह्यन्ये ॥ २८ ॥ छन्दत उभयाविरोधात् ॥ २९ ॥ गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ ३० ॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लौकिकवत् ॥ ३१ ॥ अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३२ ॥ यावदधिकारमवस्थितिरधिकारि

कावाम् ॥ ३३ ॥ अक्षरधियां त्ववरोधः सामान्य तद्भावाभ्यामौपसदवदुक्तम् ॥ ३४ ॥ इयदामननात् ॥ ३५ ॥ अन्तराभूतग्रामवत् स्वात्मनः ॥ ३६ ॥ अन्यथाभेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३७ व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३८ ॥ सैव हि सत्यादयः ॥ ३९ ॥ कामादीतरत्र तत्र चायतनादिभ्यः ॥ ४० ॥ आदरादलोपः ॥ ४१ ॥ उपस्थितेऽतस्तद्वचनात् ॥ ४२ ॥ तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४३ ॥ प्रदानवदेव तदुक्तम् ॥ ४४ ॥ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४५ पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ ४६ अतिदेशाच्च ॥ ४७ ॥ विद्यैव तु निर्धारणात् ॥ ४८ दर्शनाच्च ॥ ४९ ॥ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ५० ॥ अनुबन्धादिभ्यः ॥ ५१ ॥ प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ॥ ५२ ॥ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५३ ॥ परेण च शब्दस्य ताद्विध्यंभूयस्त्वात्त्वनुबन्धः ॥ ५४ ॥ एक आत्मनः शरीरे भावात् ॥ ५५ ॥ व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५६ ॥ अङ्गावबद्धास्तु न शाखासु हि

प्रतिवेदम् ॥ ५७ ॥ मन्त्रादिवद्वाऽविरोधः ॥ ५८ ॥ भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५९ ॥ नानाशब्दादिभेदात् ॥ ६० ॥ विकल्पोऽविशिष्टफलत्वात् ॥ ६१ ॥ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६२ ॥ अंगेषु यथाश्रयभावः ॥ ६३ शिष्टेश्च ॥ ६४ ॥ समाहारात् ॥ ६५ ॥ गुणसाधारण्यश्रुतेश्च ॥ ६६ ॥ न वा तत् सहभावाश्रुतेः ॥ ६७ दर्शनाच्च ॥ ६८ ॥

चतुर्थपादः

पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥ शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ २ ॥ आचारदर्शनात् ॥ ३ ॥ तच्छ्रुतेः ॥ ४ ॥ समन्वारम्भणात् ॥ ५ ॥ तद्वतो विधानात् ॥ ६ ॥ नियमाच्च ॥ ७ ॥ अधिकोपदेशात्तुबादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥ तुल्यन्तु दर्शनम् ॥ ९ ॥ असार्वत्रिकी ॥ १० विभागः शतवत् ॥ ११ ॥ अध्ययनमात्रवतः ॥ १२ नाविशेषात ॥ १३ ॥ स्तुतयेऽनमतिर्वा ॥ १४ ॥ कामचारेण चैके ॥ १५ ॥ उपर्दश्च ॥ १६ ॥ ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥ परामर्शं जैमिनिरचो-

दना चापवदति हि ॥ १८ ॥ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥ विधिर्वा धारणवत् ॥ २० ॥ स्तुतिमात्रमुपादानादिति चेत् नापूर्वत्वात् ॥ २१ भावशब्दाच्च ॥ २२ ॥ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥ तथा चैकवाक्यतोपबन्धात् ॥ २४ अतएव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥ सर्वापेक्षा च यज्ञादि श्रुतेरश्ववत् ॥ २६ ॥ शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतयातेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥ अबाधाच्च ॥ २९ ॥ अपि च स्मर्य्यते ॥ ३० शब्दश्चातोऽकामकारे ॥ ३१ ॥ विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥ सहकारित्वेन च ॥ ३३ ॥ सर्वथापि तु त एवोभयलिङ्गात् ॥ ३४ ॥ अनभिभवञ्च दर्शयति ३५ ॥ अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥ अपि च स्मर्य्यते ॥ ३७ ॥ विशेषानुग्रहश्च ॥ ३८ ॥ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥ तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ ४० ॥ न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥ उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम् ॥ ४२ ॥ बहि-

स्तुभयथापि स्मृतेराचाराच्च ॥ ४३ ॥ स्वामिनः फल-श्रुतेरित्यात्रेयः ॥ ४४ ॥ आर्त्विज्यमित्यौडुलोमि-स्तस्मै हि परिक्रीयते ॥ ४५ ॥ श्रुतेश्च ॥ ४६ ॥ सह-कार्यन्तरविधिः पक्षेण तृतीयं तद्वतोविध्यादिवत् ॥ ४७ ॥ कृत्स्नभावात्तु गृहीणोपसंहारः ॥ ४८ ॥ मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥ अनाविष्कुर्वन्न न्वयात् ॥ ५० ॥ ऐहिकमप्यप्रस्तुत प्रतिबंधे तद्दर्श-नात् ॥ ५१ ॥ एवं मुक्तिफलानियमस्तदवस्थावधृते-स्तदवस्थावधृतेः ॥ ५२ ॥

## चतुर्थोऽध्यायः

### प्रथमपादः

आवृत्तिरसकृदुपदेशात् ॥ १ ॥ लिङ्गाच्च ॥ २ ॥ आत्मेतितूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥ न प्रति-केन हि सः ॥ ४ ॥ ब्रह्म दृष्टिरुतकर्षात् ॥ ५ ॥ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥ आसीनः सम्भवात् ॥ ७ ॥ ध्यानाच्च ॥ ८ ॥ अचलत्वञ्चापेक्ष्य ॥ ९ ॥ स्मरन्ति च ॥ १० ॥ यत्रैकाग्रता तत्रावि-शेषात् ॥ ११ ॥ आप्रायणात् तत्रापि हि दृष्टम्

॥ १२ ॥ तदधिगम उत्तर पूर्वाद्ययोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥ इतरस्याप्येवमसंश्लेषः पातेतु ॥ १४ ॥ अनारब्ध कार्ये एव तु पूर्वे तद वधेः ॥ १५ ॥ अग्निहोत्रादि तु तत्कार्य्ययैव तद्दर्श-नात् ॥ १६ ॥ अतो ऽन्यापि ह्येकेषामुभयोः ॥ १७ यदेव विद्ययेति हि ॥ १८ ॥ भोगेन त्वितरे क्षप-यित्वासम्पद्यते ॥ १९ ॥

द्वितीयपादः

वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥ अतएव च सर्वाण्यनु ॥ २ ॥ तन्मनः प्राण उत्तरात् ॥ ३ ॥ सो ऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥ भूतेषु तः श्रुतेः ॥ ५ ॥ नैकस्मिन् दर्शयतो हि ॥ ६ ॥ समानाचा-सृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥ तदपीतेः संसारव्यदेशात् ॥ ८ ॥ सूक्ष्मं प्रमाणतश्च तथोप-लब्धेः ॥ ९ ॥ नोपमर्द्दनातः ॥ १० ॥ अस्यैव चोप-पत्तेरेष उष्मा ॥ ११ ॥ प्रतिषेधादिति चेन्न शरी-रात् ॥ १२ ॥ स्पष्टो ह्येकेषाम् ॥ १३ ॥ स्मार्य्यते च ॥ १४ ॥ तानि परे तथा ह्याह ॥ १५ ॥ अविभागो वचनात् ॥ १६ ॥ तदोकोग्रज्वलनं तत्प्रकाशितद्वारो

विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृति योगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥ रश्म्यनुसारी ॥ १८ निशि नेति चेन्न सम्बन्धात् ॥ १९ ॥ यावद्देहभावित्वाद्दर्शयति च ॥ २० ॥ अतश्चायनेऽपि हि दक्षिणे ॥ २१ ॥ योगिनः प्रति च स्मर्य्यते स्मार्त्ते चैते ॥ २२ ॥

तृतीयपादः

अर्चिरादिना तत्प्रथितेः ॥ १ ॥ वायुशब्दादविशेषाभ्याम् ॥ २ ॥ तडितोऽधिवरुणः सम्बधात् ॥ ३ आतिवाहिकस्तल्लिङ्गात् ॥ ४ ॥ उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥ वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥ कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥ विशेषितत्वाच्च ॥ ८ ॥ सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥ कार्य्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥ स्मृतेश्च ॥ ११ ॥ परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥ दर्शनाच्च ॥ १३ ॥ न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १४ ॥ अप्रतीकालम्बनान्नयतीति स बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥ १५ ॥ विशेषञ्च दर्शयति ॥ १६ ॥

चतुर्थपादः

सम्पद्याविर्भावः स्वेन शब्दात् ॥ १ ॥ मुक्तः प्रतिज्ञानात् ॥ २ ॥ आत्मा प्रकरणात् ॥ ३ ॥ अविभागेनैव दृष्टत्वात् ॥ ४ ॥ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥ चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥ एवमप्युपन्यासात् पूर्वं भावादविरोधं बादरायणः ॥ ७ ॥ सङ्कल्पादेव तु तच्छ्रुतेः ॥ ८ ॥ अतएव चानन्याधिपति ॥ ९ ॥ अभावं वादरिराह ह्येवम् ॥ १० ॥ भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥ द्वादशाहवदुभयविधं वादरायणोऽतः ॥ १२ ॥ तन्वभावे सन्ध्यावदुपपद्यते ॥ १३ भावे जाग्रद्वत् ॥ १४ ॥ प्रदीपवदावेश स्तथा हि दर्शयति ॥ १५ ॥ स्वाप्ययसम्पत्त्योरन्य तरापेक्ष्यमाविष्कृतं हि ॥ १६ ॥ जगद्व्यापारवर्ज्जम् ॥ १७ ॥ प्रकरणादसन्निहितत्वाच्च ॥ १८ ॥ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १९ ॥ विकारावर्त्ति च तथाहि स्थितिमाह ॥ २० ॥ दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २१ ॥ भोगमात्र साम्यलिङ्गाच्च ॥ २२ ॥ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २३ ॥

ओं

# वैशेषिक दर्शनम्

महामुनि कणाद विरचितम्

सूत्रम्

लवपुरे

विरजानन्द यंत्रालये

मुद्रितम्

मूल्य ।)॥ डाक व्यय )॥

# वैशेषिक दर्शनम्।

## प्रथमाध्याये

### प्रथमाह्निकम्।

अथातो धर्मं व्याख्यास्यामः ॥ १ ॥ यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म्मः ॥ २ ॥ तद्वचनादाम्नायस्य प्रामाण्यम् ॥ ३ ॥ धर्म्मविशेषप्रसूताद् द्रव्यगुणकर्म्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् ॥ ४ ॥ पृथिव्यापस्तेजोवायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ॥ ५ ॥ रूपरसगन्धस्पर्शाः सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयःसुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः ॥ ६ ॥ उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्म्माणि ॥ ७॥ सदनित्यं द्रव्यवत् कार्य्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः ॥ ८ ॥ द्रव्यगुणयोः

सजातीयारम्भकत्त्वं साधर्म्यम् ॥ ९ ॥ द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम् ॥ १० ॥ कर्म कर्मसाध्यं न विद्यते ॥ ११ ॥ न द्रव्यं कार्य्यं कारणंच वधति ॥ १२ ॥ उभयथा गुणाः ॥ १३ ॥ कार्य्यविरोधि कर्म ॥ १४ ॥ क्रियागुणवत् समवायिकारणमितिद्रव्यलक्षणम् ॥१५॥ द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम् ॥ १६ ॥ एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमितिकर्मलक्षणम् ॥ १७ ॥ द्रव्यगुणकर्मणां द्रव्यं कारणं सामान्यम् ॥ १८ ॥ तथा गुणः ॥ १९ ॥ संयोगविभागवेगानां कर्म समानम् ॥ २० ॥ न द्रव्याणां कर्म ॥ २१ व्यतिरेकात् ॥ २२ ॥ द्रव्याणां द्रव्यं कार्य्यं सामान्यम् ॥ २३ ॥ गुणवैधर्म्यान्न कर्मणां कर्म ॥ २४ ॥ द्वित्वप्रभृतयः सङ्ख्याः पृथक्त्वसंयोगविभागाश्च ॥ २५ असमवायात् सामान्यकार्य्यं कर्म न विद्यते ॥ २६ ॥ संयोगानां द्रव्यम् ॥ २७ ॥ रूपाणां रूपम् ॥ २८ ॥ गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम् ॥ २९ ॥ संयोगविभागाश्च कर्मणाम् ॥ ३० ॥ कारणसामान्ये द्रव्यकर्मणांकर्मा कारणमुक्तम् ॥ ३१ ॥

द्वितीयाह्निकम्।

कारणाभावात्कार्य्याभावः ॥ १ ॥ न तु कार्य्या-भावात् कारणाभावः ॥ २ ॥ सामान्यं विशेष इति बुद्ध्यपेक्षम् ॥ ३ ॥ भावोऽनुवृत्तेरेव हेतुत्वात् सामान्यमेव ॥ ४ ॥ द्रव्यत्वं गुणत्वं कर्मत्वञ्च सामान्यानि विशेषाश्च ॥ ५ ॥ अन्यत्रान्त्येभ्यो विशेषेभ्यः ॥ ६ ॥ स-दिति यतो द्रव्यगुणकर्मसु सा सत्ता ॥ ७ ॥ द्रव्यगुण कर्मभ्योऽर्थान्तरं सत्ता ॥ ८ ॥ गुणकर्मसु च भावान्न कर्म न गुणः ॥ ९ ॥ सामान्यविशेषाभावेन च ॥ १० अनेकद्रव्यवत्त्वेन द्रव्यत्वमुक्तम् ॥ ११ ॥ सामान्य विशेषाभावेन च ॥ १२ ॥ तथा गुणेषु भावाद् गुणत्व मुक्तम् ॥ १३ ॥ सामान्य विशेषाभावेन च । १४ ॥ कर्मसु भावात् कर्मत्वमुक्तम् ॥ १५ ॥ सामान्यविशेषा-भावेन च ॥ १६ ॥ सदिति लिङ्गाविशेषाद् विशेषलि ङ्गाभावाच्चैकोभावः ॥ १७ ॥

---

द्वितीयाध्याये

प्रथमाह्निकम्।

रूपरसगन्धस्पर्शवती पृथिवी । १ ॥ रूपरसस्पर्श वत्य आपोद्रवाः स्निग्धाः ॥ २ ॥ तेजोरूपस्पर्शवत् ॥ ३

स्पर्शवान् वायुः ॥ ४ ॥ न आकाशे न विद्यन्ते ॥ ५ सर्पिर्जतुमधूच्छिष्टानामग्नि संयोगाद्द्रवत्वमद्भिः सामान्यम् ॥ ६ ॥ त्रपुसीसलोहरजतसुवर्णानामग्नि संयोगाद्द्रवत्वमद्भिः सामान्यं ॥ ७ ॥ विषाणी ककुद्मान् प्रान्ते वालधिः सास्नावान् इति गोत्वे दृष्टं लिङ्गम् ॥ ८ ॥ स्पर्शश्च वायोः ॥ ९ ॥ न च दृष्टानां स्पर्श इत्यदृष्टलिङ्गोवायुः ॥ १० ॥ अद्रव्यवत्त्वेन द्रव्यम् ॥ ११ क्रियावत्त्वाद् गुणवत्त्वाच्च ॥ १२ ॥ अद्रव्यत्वेन नित्यत्वमुक्तम् ॥ १३ ॥ वायोर्वायुसंमूर्छनं नानात्वलिङ्गम् १४ वायुसन्निकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं नविद्यते १५ सामान्यतो दृष्टाच्चाविशेषः ॥ १६ ॥ तस्मादागमिकम् ॥ १७ ॥ संज्ञा कर्म त्वस्मद्विशिष्टानां लिङ्गम ॥ १८ प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्मणः ॥ १९ ॥ निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम् ॥ २० ॥ तदलिङ्गमेकद्रव्यत्वात् कर्मणः ॥ २१ ॥ कारणान्तरानुक्लृप्तिवैधर्म्याच्च । २२ ॥ संयोगादभावः कर्मणः ॥ २३ ॥ कारणगुणपूर्वकः कार्य्यगुणो दृष्टः ॥ २४ ॥ कार्य्यान्तराप्रादुर्भावाच्च शब्दः स्पर्शवतामगुणः ॥ २५ ॥ परत्र समवायात् प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः ॥ २६ ॥ परिशेषाल्लिङ्गमाकाशस्य ॥ २७ ॥ द्रव्यत्वनित्यत्वे वा-

युना व्याख्याते ॥ २८ ॥ तत्त्वंभावेन ॥ २९ ॥ शब्द-लिंगाविशेषाद्विशेषलिंगाभावाच्च ॥ ३० ॥ तदनुवि-धानादेकपृथक्त्वंचेति ॥ ३१ ॥

---

द्वितीयाह्निकम् ।

पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तराप्रादुर्भावो वस्त्रे गन्धाभावलिङ्गम् ॥ १ ॥ व्यवस्थितः पृथिव्यां गन्धः ॥ २ ॥ एतेनोष्णता व्याख्याता ॥ ३ ॥ तेजस उष्णता ॥ ४ ॥ अप्सु शीतता ॥ ५ ॥ अपरस्मिन्नपरं युगपत् चिरं क्षिप्रमिति काललिङ्गानि ॥ ६ ॥ द्रव्यत्व-नित्यत्वे वायुना व्याख्याते ॥ ७ ॥ तत्त्वंभावेन ॥ ८ ॥ नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति ॥ ९ ॥ इत इदमिति यतस्तद्दिश्यं लिङ्गम् ॥ १० ॥ द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ११ ॥ तत्त्वंभा-वेन ॥ १२ ॥ कार्य्य विशेषेण नानात्वम् ॥ १३ ॥ आदित्यसंयोगाद् भूतपूर्वाद्भविष्यतो भूताच्च प्राची ॥ १४ ॥ तथा दक्षिणा प्रतीची उदीची च ॥ १५ ॥ एतेन दिगन्तरालानि व्याख्यातानि ॥ १६ ॥ सामान्य-प्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च संशयः ॥ १७ ॥ दृष्टं च दृष्टवत् ॥ १८ ॥ यथादृष्टमयथादृष्टत्वाच्च ॥ १९

विद्याऽविद्यातश्च संशयः ॥ २० ॥ श्रोत्रग्रहणो योऽर्थः स शब्दः॥ २१ ॥ तुल्यजातीये ष्वर्थान्तरभूतेषु विशेषस्य उभया दृष्टत्वात् ॥ २२ ॥ एक द्रव्यत्वान्न द्रव्यम् ॥ २३ ॥ नापिकर्माऽचाक्षुषत्वात् ॥ २४ ॥ गुणस्य सतोऽपवर्गः कर्मभिः साधर्म्यम् ॥ २५ ॥ सतो लिंगाभावात् ॥ २६ ॥ नित्यवैधर्म्यात् ॥ २७॥ अनित्यश्चायं कारणतः ॥ २८ ॥ न चासिद्धं विकारात् ॥ २९ ॥ अभिव्यक्तौ दोषात् ॥ ३० ॥ संयोगाद्विभागाच्च शब्दाच्च शब्दनिष्पत्तिः ॥ ३१ ॥ लिंगाच्चानित्यः शब्दः ॥ ३२ ॥ द्वयोस्तु प्रवृत्त्योरभावात् ॥ ३३ ॥ प्रथमाशब्दात् ॥ ३४ ॥ सम्प्रत्तिपत्तिभावाच्च ॥ ३५ ॥ सन्दिग्धा सति वहुत्वे ॥ ३६ ॥ सङ्ख्याभावः सामान्यतः ॥ ३७ ॥

---

## तृतीयोऽध्याये ।

### प्रथमाह्निकम्

प्रसिद्धा इन्द्रियार्थाः ॥ १ ॥ इन्द्रियार्थं प्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः ॥ २ ॥ सोऽनपदेशः ॥ ३ कारणाज्ञानात् ॥ ४ ॥ कार्य्येषु ज्ञानात् ॥ ५ ॥ अज्ञानाच्च ॥ ६ ॥ अन्यदेवहेतुरित्यनपदेशः ॥ ७ ॥

अर्थान्तरं ह्यर्थान्तरस्याऽनपदेशः ॥ ८ ॥ संयोगिसम-वाय्येकार्थसमवायिविरोधि च ॥ ९ ॥ कार्य्यं कार्य्यान्तरस्य ॥ १० ॥ विरोध्यभूतं भूतस्य ॥ ११ ॥ भूतमभूतस्य ॥ १२ ॥ भूतोभूतस्य ॥ १३ ॥ प्रसिद्धि पूर्वकत्वादपदेशस्य ॥ १४ ॥ अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चानपदेशः ॥ १५ ॥ यस्माद्विषाणी तस्मादश्वः ॥ १६ ॥ यस्माद्विषाणी तस्माद्गौरिति चानैकान्तिकस्योदाहरणम् ॥ १७ ॥ आत्मेन्द्रियार्थ सन्निकर्षाद्यन्निष्पद्यते तदन्यत् ॥१८॥ प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम् ॥ १९ ॥

---

द्वितीयाह्निकम्.

आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम् ॥ १ ॥ तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ २ ॥ प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम् ॥ ३ ॥ प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि ॥ ४ ॥ तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते ॥ ५ ॥ यज्ञदत्त इति सन्निकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते ॥ ६ ॥ सामान्यतो दृष्टाच्चाविशेषः ॥ ७ ॥ तस्मादागमिकः ॥ ८ ॥

मितिशब्दस्य व्यतिरेकान्नागमिकम् ॥ ९ ॥ यदि दृष्टमन्वक्षमहं देवदत्तोऽहं यज्ञदत्त इति ॥ १० ॥ दृष्टआत्मनि लिङ्गे एक एव दृढत्वात् प्रत्यक्षवत् प्रत्ययः ॥११॥ देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युप चाराच्छरीरे प्रत्ययः ॥१२॥ सन्दिग्धस्तूपचारः ॥ १३॥ अहमिति प्रत्यगात्मनि भावात् परत्राभावादर्थान्तर प्रत्यक्षः ॥ १४ ॥ देवदत्तो गच्छतीत्युपचारादभि मानात्तावच्छरीर प्रत्यक्षोऽहङ्कारः ॥ १५ ॥ सन्दिग्ध स्तूपचारः ॥ १६॥ न तु शरीरविशेषाद् यज्ञदत्तविष्णु-मित्रयोर्ज्ञानं विषयः ॥ १७ ॥ अहमिति मुख्ययो ग्याभ्यां शब्दवद्व्यतिरेकाव्यभिचाराद्विशेषसिद्धेर्नाग-मिकः ॥ १८ ॥ सुखदुःखज्ञाननिष्पत्त्यविशेषादैका-त्म्यम् ॥ १९ ॥ व्यवस्थातो नाना ॥ २० ॥ शास्त्र सामर्थ्याच्च च ॥ २१ ॥

---

## चतुर्थाध्याये

### प्रथमाह्निकम्

सदकारणवन्नित्यम् ॥ १ ॥ तस्य कार्यं लि-ङ्गम् ॥ २ ॥ कारणाभावात् कार्याभावः ॥ ३ ॥

अनित्य इति विशेषतः प्रतिषेधभावः ॥ ४ ॥ अविद्या ॥ ५ ॥ महत्यनेकद्रव्यत्त्वात् रूपाच्चोपलब्धिः ॥ ६ ॥ सत्यपि द्रव्यत्वे महत्त्वे रूपसंस्काराभावाद्वायोरनुपलब्धिः ॥ ७ ॥ अनेकद्रव्यसमवायात् रूपविशेषाच्च रूपोपलब्धिः ॥ ८ ॥ तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम् ॥ ९ ॥ तस्याभावादव्यभिचारः ॥ १० ॥ सङ्ख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायात् चाक्षुषाणि ॥११॥ अरूपिष्वचाक्षुषाणि ॥ १२ ॥ एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम् ॥ १३ ॥

---

द्वितीयाह्निकम् ।

तत् पुनः पृथिव्यादिकार्य्यद्रव्यं त्रिविधं शरीरेन्द्रियविषय संज्ञकम् ॥ १ ॥ प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात् पञ्चात्मकं न विद्यते ॥ २ ॥ गुणान्तराप्रादुर्भावाच्च न त्र्यात्मकम् ॥ ३ ॥ अणुसंयोगस्त्वप्रतिषिद्धः ॥ ४ ॥ तत्र शरीरं द्विविधं योनिजमयोनिजञ्च ॥ ५ ॥ अनियतदिग्देशपूर्वकत्वात् ॥ ६ ॥ धर्मविशेषाच्च ॥ ७ ॥ समाख्याभावाच्च ॥ ८ ॥

संज्ञाया अनादित्वात् ॥ ९ ॥ सन्त्ययोनिजाः ॥ १० ॥ वेदलिङ्गाच्च ॥ ११ ॥

---

## पञ्चमाध्याये

### प्रथमाह्निकम् ।

आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म ॥ १ ॥ तथा हस्तसंयोगाच्च मुषले कर्म ॥ २ ॥ अभिघातजे मुषलादौ कर्मणि व्यतिरेकादकारणं हस्तसंयोगः ॥ ३ तथात्मसंयोगो हस्तकर्मणि ॥ ४ ॥ अभिघातान्मुषलसंयोगाद्धस्ते कर्म ॥ ५ ॥ आत्मकर्म हस्तसंयोगाच्च ॥ ६ ॥ संयोगाभावे गुरुत्वात् पतनम् ॥ ७ नोदनविशेषाभावान्नोर्द्ध्वं न तिर्य्यग्गमनम् ॥ ८ ॥ प्रयत्नविशेषान्नोदनविशेषः ॥ ९ ॥ नोदनविशेषादुदसनविशेषः ॥ १० ॥ हस्तकर्मणा दारककर्म व्याख्यातम् ॥ ११ ॥ तथा दग्धस्य विस्फोटने ॥ १२ यत्नाभावे प्रसुप्तस्य चलनम् ॥ १३ ॥ तृणे कर्म वायुसंयोगात् ॥ १४ ॥ मणिगमनं सूच्यभिसर्पणमदृष्टकारणकम् ॥ १५ ॥ इषावयुगपत्संयोगविशेषाः कर्मान्यत्वे हेतुः ॥ १६ ॥ नोदनादाद्यमिषोः

कर्म तत्कर्मकारिताच् च संस्कारादुत्तरं तथोत्तरमुत्तरञ्च ॥ १७ ॥ संस्काराभावे गुरुत्वात् पतनम् ॥ १८ ॥

---

द्वितीयाह्निकम्

नोदनाभिघातात् संयुक्तसंयोगाच् च पृथिव्यां कर्म ॥ १ ॥ तद्विशेषेणादृष्टकारितम् ॥ २ ॥ अपां संयोगाभावे गुरुत्वात् पतनम् ॥ ३ ॥ द्रवत्वात् स्यन्दनम् ॥ ४ ॥ नाड्यो वायुसंयोगादारोहणम् ॥ ५ ॥ नोदनापीडनात् संयुक्तसंयोगाच् च ॥ ६ ॥ वृक्षाभिसर्पणमित्यदृष्टकारितम् ॥ ७ ॥ अपां संघातो विलयनञ्च तेजःसंयोगात् ॥ ८ ॥ तत्र विस्फूर्जथुर्लिङ्गम् ॥ ९ ॥ वैदिकञ्च ॥ १० ॥ अपां संयोगाद् विभागाच् च स्तनयित्नोः ॥ ११ ॥ पृथिवीकर्मणा तेजःकर्म वायुकर्म च व्याख्यातम् ॥ १२ ॥ अग्नेरूर्द्ध्वज्वलनं वायोस्तिर्य्यक्पवनमणूनां मनसश्चाद्यं कर्मादृष्टकारितम् ॥ १३ ॥ हस्तकर्मणा मनसः कर्म व्याख्यातम् ॥ १४ ॥ आत्मेन्द्रियमनोऽर्थसन्निकर्षात् सुखदुःखे ॥ १५ ॥ तदनारम्भ आत्मस्थे मनसि शरीरस्य दुःखाभावः संयोगः ॥ १६ ॥ अपसर्पण-

मुपसर्पणमशितपीतसंयोगाः कार्य्यान्तरसंयोगाश्चे त्यदृष्टकारितानि ॥ १७ ॥ तदभावे संयोगाभावो ऽप्रादुर्भावश्च मोक्षः ॥ १८ ॥ द्रव्यगुणकर्म निष्पत्ति वैधर्म्यादभावस्तमः ॥ १९ ॥ तेजसो द्रव्यान्तरेणावरणाच्च ॥ २० ॥ दिक्कालावाकाशञ्च क्रियावद्वैधर्म्यान्निष्क्रियाणि ॥ २१ ॥ एतेन कर्माणि गुणाश्च व्याख्याताः ॥ २२ ॥ निष्क्रियाणां समवायः कर्मभ्यो निषिद्धः ॥ २३ ॥ कारणन्त्वसमवायिनो गुणाः ॥ २४ गुणैर्दिग् व्याख्याता ॥ २५ ॥ कारणेन कालः ॥२६

---

## षष्ठाध्याये

### प्रथमाह्निकम् ।

बुद्धिपूर्वा वाक्यकृतिर्वेदे ॥ १ ॥ ब्राह्मणे संज्ञा कर्म सिद्धिलिङ्गम् ॥ २ ॥ बुद्धिपूर्वो ददातिः ॥ ३ ॥ तथा प्रतिग्रहः ॥ ४ ॥ आत्मान्तरगुणानामात्मान्तरे ऽकारणत्वात् ॥ ५ ॥ तद्दुष्टभोजने न विद्यते ॥ ६ ॥ दुष्टं हिंसायाम् ॥ ७ ॥ तस्य समभिव्याहारतो दोषः ॥ ८ ॥ तददुष्टे न विद्यते ॥ ९ ॥ पुनर्विशिष्टे प्रवृत्तिः ॥ १० ॥ समे हीने वा प्रवृत्तिः ॥ ११ ॥ एतेन हीनसमविशिष्टधार्मिकेभ्यः परस्वादानं व्याख्या-

तम् ॥ १२ ॥ तथा विरुद्धानां त्यागः ॥ १३ ॥ हीने परे त्यागः ॥ १४ ॥ समे आत्मत्यागः परत्यागो वा ॥ १५ विशिष्टे आत्मत्यागः इति ॥ १६ ॥

---

द्वितीयाह्निकम्

दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय ॥ १ ॥ अभिषेचनोपवासब्रह्मचर्य्यगुरुकुलवासवानप्रस्थयज्ञदानप्रोक्षणदिङ्नक्षत्रमन्त्रकालनियमाश्च दृष्टाय ॥ २ ॥ चातुराश्रम्यमुपधा अनुपधाश्च ॥ ३ भावदोष उपधाऽदोषोऽनुपधा ॥ ४ ॥ यदिष्टरूपरसगन्धस्पर्शं प्रोक्षितमभ्युक्षितञ्च तच्छुचि ॥ ५ ॥ अशुचीति शुचिप्रतिषेधः ॥ ६ ॥ अर्थान्तरंच ॥ ७ ॥ अयतस्य शुचिभोजनादभ्युदयो न विद्यते नियमाभावात् विद्यते वाऽर्थान्तरत्वाद् यमस्य ॥ ८ ॥ असति चाभावात् ॥ ९ ॥ सुखाद्रागः ॥ १० ॥ तन्मयत्वाच्च ॥ ११ ॥ अदृष्टाच्च ॥ १२ ॥ जातिविशेषाच् च ॥ १३ ॥ इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्तिः ॥ १४ ॥ तत्संयोगो विभागः ॥ १५ ॥ आत्मकर्मसु मोक्षोव्याख्यातः ॥ १६ ॥

## सप्तमाऽध्याये

### प्रथमाह्निकम् ।

उक्ता गुणाः ॥ १ ॥ पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च ॥ २ ॥ एतेन नित्येषु नित्यत्वमुक्तम् ॥ ३ ॥ अप्सु तेजसि वायौ च नित्या द्रव्यनित्यत्वात् ॥४॥ अनित्येष्वनित्या द्रव्यानित्यत्वात् ५॥ कारणगुणपूर्वकाः पृथिव्यां पाकजाः ॥ ६ ॥ एकद्रव्यत्वात् ॥ ७ ॥ अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते ॥ ८ ॥ कारणबहुत्वाच्च ॥ ९ ॥ अतो विपरीतमणु ॥ १० ॥ अणुमहदिति तस्मिन् विशेषभावात् विशेषाभावाच्च ॥ ११ ॥ एककालत्वात् ॥ १२ ॥ दृष्टान्ताच्च ॥ १३ ॥ अणुत्वमहत्त्वयोरणुत्वमहत्त्वाभावः कर्मगुणैर्व्याख्यातः ॥ १४ ॥ कर्मभिः कर्माणि गुणैश्च गुणा व्याख्याताः ॥ १५ ॥ अणुत्वमहत्त्वाभ्यां कर्मगुणाश्च व्याख्याताः ॥ १६ ॥ एतेन दीर्घत्वह्रस्वत्वे व्याख्याते ॥ १७ ॥ अनित्येऽनित्यम् ॥ १८ ॥ नित्ये नित्यम् ॥ १९ ॥ नित्यं परिमण्डलम् ॥ २० ॥ अविद्या च विद्यालिङ्गम् २१ विभवान्महानाकाशस्तथाचात्मा ॥ २२ ॥ तदभावा-

दृशु मनः ॥ २३ ॥ गुणैर्दिग् व्याख्याता ॥ २४ ॥ कारणे कालः ॥ २५ ॥

---

द्वितीयाह्निकम् ।

रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम् ॥ १ ॥ तथा पृथक्त्वम् ॥ २ ॥ एकत्वैकपृथक्त्वयोरेकत्वैकपृथक्त्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ ३ ॥ निःसङ्ख्यत्वात् कर्मगुणानां सर्वैकत्वं न विद्यते ॥ ४ ॥ भ्रान्तं तत् ॥ ५ ॥ एकत्वभावाद्भक्तिस्तु न विद्यते ॥ ६ ॥ कार्य्यकारणयोरेकत्वैकपृथक्त्वाभावादेकत्वैकपृथक्त्वं न विद्यते ॥ ७ ॥ एतदनित्ययोर्व्याख्यातम् ॥ ८ ॥ अन्यतरकर्मज उभयकर्मजः संयोगजश्च संयोगः ॥ ९ ॥ एतेन विभागो व्याख्यातः ॥ १० संयोगविभागयोः संयोगविभागाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः ॥ ११ ॥ कर्मभिः कर्माणि गुणैर्गुणा अणुत्वमहत्त्वाभ्यामिति ॥ १२ ॥ युतसिद्ध्यभावात् कार्य्यकारणयोः संयोगविभागौ न विद्येते ॥ १३ ॥ गुणत्वात् ॥ १४ ॥ गुणोऽपि विभाव्यते ॥ १५ निष्क्रियत्वात् ॥ १६ ॥ असति नास्तीति च प्रयो-

गात् ॥ १७ ॥ शब्दार्थावसम्बन्धौ ॥ १८ ॥ संयोगिनो दण्डात् समवायिनो विशेषाच्च ॥ १९ ॥ सामयिकः शब्दादर्थप्रत्ययः ॥ २० ॥ एकदिक्काभ्यामेककालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरं च ॥ २१ ॥ कारणपरत्वात् कारणापरत्वाच्च ॥ २२ ॥ परत्वापरत्वयोः परत्वापरत्वभावोऽणुत्वमहत्वाभ्यां व्याख्यातः ॥ २३ ॥ कर्मभिः कर्माणि ॥ २४ ॥ गुणैर्गुणाः ॥ २५ ॥ इहेदमिति यतः कार्य्यकारणयोः स समवायः ॥ २६ ॥ द्रव्यत्वगुणत्वप्रतिषेधो भावेन व्याख्यातः ॥ २७ ॥ तत्वम्भावेन ॥ २८ ॥

---

## अष्टमाध्याये

### प्रथमाह्निकम् ।

द्रव्येषु ज्ञानं व्याख्यातम् ॥ १ ॥ तत्रात्मा मनश्चाप्रत्यक्षे ॥ २ ॥ ज्ञाननिर्देशे ज्ञाननिष्पत्तिविधिरुक्तः ॥ ३ ॥ गुणकर्म्मसु सन्निकृष्टेषु ज्ञाननिष्पत्तेर्द्रव्यं कारणम् ॥ ४ ॥ सामान्यविशेषेषु सामान्यविशेषाभावात्तत एव ज्ञानम् ॥ ५ ॥ सामान्यविशेषापेक्षं द्रव्यगुणकर्मसु ॥ ६ ॥ द्रव्ये द्रव्यगुणकर्मापेक्षम् ॥ ७॥

गुणकर्मसु गुणकर्माभावाद्गुणकर्मापेक्षं न विद्यते ॥ ८ ॥ समवायिनः श्वैत्याच्छ्वैत्यबुद्धेश्च श्वेते बुद्धिस्ते एते कार्य्यकारणभूते ॥ ९ ॥ द्रव्येष्वनितरेतरकारणाः ॥ १० ॥ कारणायौगपद्यात् कारणक्रमाच्च घटपटादिबुद्धीनां क्रमो न हेतुफलभावात् ॥ ११ ॥

---

द्वितीयाह्निकम् ।

अयमेष त्वया कृतं भोजयैनमिति बुद्ध्यपेक्षम् ॥ १ दृष्टेषु भावाददृष्टेष्वभावात् ॥ २ ॥ अर्थ इतिद्रव्यगुण कर्मसु ॥ ३ ॥ द्रव्येषु पञ्चात्मकत्वं प्रतिषिद्धम् ॥४॥ भूयस्त्वाद् गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः ॥५ तथापस्तेजोवायुश्च रसरूपस्पर्शाविशेषात् ॥ ६ ॥

---

## नवमाध्याये

### प्रथमाह्निकम् ।

क्रियागुणव्यपदेशाभावात् प्रागसत् ॥ १ ॥ सद-सत् ॥ २ ॥ असतः क्रियागुणव्यपदेशाभावादर्था न्तरम् ॥ ३ ॥ सच्चासत् ॥ ४ ॥ यच्चान्यदसदतस्तद

रूत् ॥ ५ ॥ असदिति भूतप्रत्यक्षाभावात् भूतस्मृते र्विरोधिप्रत्यक्षवत् ॥ ६ ॥ तथाऽभावे भावप्रत्यक्षत्वाच्च ॥७॥ एतेनाघटोऽगौरधर्मश्च व्याख्यातः ॥ ८ ॥ अभूतं नास्तीत्यनर्थान्तरम् ॥ ९ ॥ नास्ति घटो गेहे इति सतो घटस्य गेहसंसर्गप्रतिषेधः ॥ १० ॥ आत्मन्यात्ममनसोः संयोगविशेषादात्मप्रत्यक्षम् ॥ ११ तथा द्रव्यान्तरेषु प्रत्यक्षम् ॥ १२ ॥ असमाहितान्तःकरणा उपसंहृतसमाधयस्तेषाञ्च ॥ १३ ॥ तत् समवायात् कर्मगुणेषु ॥ १४ ॥ आत्मसमवायादात्मगुणेषु ॥ १५ ॥

---

द्वितीयाह्निकम्

अस्येदं कार्य्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम् ॥ १ ॥ अस्येदं कार्य्यकारणसम्बन्धश्चावयवाद्भवति ॥ २ ॥ एतेन शाब्दं व्याख्यातम् ॥ ३ ॥ हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम् ॥४॥ अस्येदमिति बुद्ध्यपेक्षितत्वात् ॥ ५ ॥ आत्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिः ॥ ६ ॥ तथा स्वप्नः ॥ ७ ॥ स्वप्नान्तिकम् ॥ ८ ॥ धर्माच्च ॥ ९ ॥

इन्द्रियदोषात् संस्कारदोषाच्चाविद्या ॥ १० ॥ तद् दुष्टज्ञानम् ॥ ११ ॥ अदुष्टं विद्या ॥ १२ ॥ आर्षं सिद्धदर्शनञ्च धर्मेभ्यः ॥ १३ ॥

---

## दशमाध्याये

### प्रथमाह्निकम् ।

इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः ॥ १ ॥ संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः ॥ २ ॥ तयोर्निष्पत्तिः प्रत्यक्षलैङ्गिकाभ्याम् ॥ ३ ॥ अभूदित्यपि ॥ ४ ॥ सति च कार्य्यादर्शनात् ॥ ५ ॥ एकार्थसमवायिकारणान्तरेषु दृष्टत्वात् ॥ ६ ॥ एकदेशे इत्येकस्मिन् शिरः पृष्ठमुदरं मर्माणि तद्विशेषस्तद्विशेषेभ्यः ॥ ७ ॥

---

### द्वितियाह्निकम् ।

कारणमिति द्रव्ये कार्य्य समवायात् ॥ १ ॥ संयोगाद्वा ॥ २ ॥ कारणे समवायात् कर्माणि ॥ ३ ॥ तथा रूपे कारणैकार्थसमवायाच्च च ॥ ४ ॥ कारणसमवा-

यात् संयोगः पटस्य ॥ ५ ॥ कारणकारणसमवाया च्च ॥ ६ ॥ संयुक्तसमवायादग्नेर्वैशेषिकम् ॥ ७ ॥ दृष्टानां दृष्टप्रयोजनानां दृष्टाभावे प्रयोगोऽभ्युदयाय ॥ ८ ॥ तद्वचनादाम्नायस्य प्रामाण्यमिति ॥ ९ ॥

समाप्तञ्चेदं शास्त्रम् ।

---

श्री दौलतराम सारणको
के चुरूसे तथा ऊर्जामंत्री
ह काल्वीको बाड़मेरसे
बनाया है। हरियाणाके नेता
को राजस्थानकी प्रतिष्ठित सीट
पार्टीका टिकट दिया गया है।

लोकसभाकी अम्बाला
धरी चांदरामको पार्टीका
नाया गया है जबकि श्री
कुरूक्षेत्रसे तथा भंग
दस्य हेतरामको सिरसासे
दवार बनाया गया है। पार्टीने
दिल्ली सीटपर श्री हिमांशु
भारतीय जनता पार्टीके
लालकृष्ण आडवाणी तथा
और कांग्रेस (इ) उम्मीदवार
के मुकाबलेमें उतारा है।
सीसे पार्टीने श्री पी. न. सिंहको
दवार बनाया है।

## ...लूट, छुरे ...घायल

एक स्थानीय प्रवक्ताके अनुसार
और छुरेसे लैस लुटेरोंने बक्सर
स्टेशनोंके बीच उक्त ट्रेनको
कर रोक लिया तथा उसकी
कूलित बोगीमें घुस गये। लुटेरे
छुरेसे आतंकित कर
लगे। विरोध
यों पर छुरेसे
से लूटे

सीट और अकाली दलको ...

सदस्यीय अमृतसर नगर निगमके लिए आज कड़ी सुरक्षाके बीच मतदान सम्पन्न हो गया। सरकारी तौरपर प्राप्त समाचारके अनुसार कुछ वारदातोंको छोड़कर मतदान शान्तिपूर्ण था।

तिथिके दो दिन बाद आज उ... विधान सभाके लिए १७१ उम्मी... नामोंकी घोषणाकी और... उम्मीदवारोंकी पहली सूची... परिवर्तन किये जबकि मझवां वि... क्षेत्रके बारेमें अभी तक कोई फै... हुआ है।

## १२।। हजार फुटकी ऊंचाई पर मतदान

अल्मोड़ा, २८ अप्रैल (वा.)। उत्तर प्रदेशमें अगले मास होनेवाले मतदानके लिए सर्वाधिक साढ़े बारह हजार फुटकी ऊंचाईपर एक मत... स्थापित किया जायगा।

अधिकृत सूत्रोंके अनुसार यह मतदान केन्द्र पिथौरागढ़ जिलेके कु... स्थापित किया जायगा। इस मतदान केन्द्र पर मतदानकी व्यवस्था क... कर्मचारियोंको सागरसे साढ़े बारह हजार फुटकी ऊंचाई तक पहुंच... मतदानकी तारीखसे सात दिन पूर्व ही रवाना होना पड़ेगा क्योंकि इ... दुरुह पर्वतीय क्षेत्रके मार्गका अधिकांश मार्गका सफर पैदल ही तय क... इसके अलावा सागरसे करीब आठ हजार फुटकी ऊंचाई पर बसे बें... मतदाताओंके लिए मतदानकी व्यवस्था करने हेतु इस मतदान केन्द्र... कर्मचारियोंको मतदानकी तिथिसे तीन चार दिन पूर्व रवाना होन... पहाड़ी क्षेत्रके दुरुह स्थलों तक पहुंचनेके लिए जीप मोटरोंके बजाय... सहायता भी ली जायगी।




...लु (पाठक) का अखिल भारतीय